तद्बहिर्भागिकोऽलिन्दो बहिस्तस्यापि चापरः ।
भागेनैकेन भित्तिः स्याद् द्वितीयालिन्दकाद् बहिः ॥ ३ ॥

तस्या द्वारप्रदेशे तु कर्तव्यौ कूर्परावुभौ ।
कर्णप्रासादिका कार्या द्वितीयालिन्दसंश्रिता ॥ ४ ॥

द्वे द्वे वातायने कुर्याद् भित्तौ दिक्षु तिसृष्वपि ।
§प्राग्ग्रीवोऽग्रे भवेच्छाला सुभद्रेयमुदाहृता ॥ ५ ॥

अस्या एव यदा पक्ष[1]प्राग्ग्रीवौ भवतो मुखे ।
नन्दिनी नामतः शाला तदा स्याद् गजवृद्धये ॥ ६ ॥

अस्या एव यदा स्यातां प्राग्ग्रीवौ पार्श्वयोर्द्वयोः ।
तदा सुभोगदा नाम तृतीया परिकीर्तिता ॥ ७ ॥

अस्या एव यदा पृष्ठे प्राग्ग्रीवः क्रियतेऽपरः ।
भद्रिका नाम शाला स्यात् तदा द्विरदपुष्टिदा ॥ ८ ॥

पञ्चमी चतुरश्रा स्याद् वर्धनी नाम पूजिता ।
प्राग्ग्रीवालिन्दनिर्यूहहीना षष्ठी तथापरा ॥ ९ ॥

शाला प्रमारिका[2] धान्यधनजीवितहारिणी ।
तदेतां वर्जयेत् कुर्यादन्याः सर्वार्थसिद्धये ॥ १० ॥

प्रमारिकेति प्रथितेह शाला सा प्राणसस्यद्रविणच्छिदे स्यात् ।
कुर्यादतस्तां न यथोदितास्तु कार्याः परा जीवितवित्तवृद्ध्यै ॥ ११ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
गजशाला नाम द्वात्रिंशोऽध्यायः ॥

---

## अथाश्वशाला नाम त्रयस्त्रिंशोऽध्यायः ।

---

अथ लक्ष्माश्वशालायाः प्रोच्यते[3] विस्तरादिह ।
स्ववेश्मवास्तोः कर्तव्यं पदे गन्धर्वसंज्ञ[4]के ॥ १

१. 'सु', २. 'क्षः' क. पाठः । ३. 'ते', ४. 'ज्ञि' ख. पाठः ।

---

§ इह सर्वत्र 'प्रग्रीव' इति पाठ्यं भाति ।

अथवा पुष्पदन्ताख्ये स्थानं वासाय वाजिनाम् ।
अरत्निशतमात्रं यज्ज्येष्ठं तत् परिकीर्तितम् ॥ २ ॥

अशीत्यरत्निकं मध्यं षष्ठ्यरत्न्यधमं भवेत् ।
स्थलप्रदेशे विपुले गुप्ते रम्ये शुचौ तथा ॥ ३ ॥

समे च चतुरश्रे च स्थि(ते?रे) मङ्गल्यमेव च ।
स्थानं हयानां कर्तव्यं प्रदेशे सुपरिक्रमे ॥ ४ ॥

निम्नगुल्मद्रुमस्थाणुचैत्यायतनवेश्मभिः ।
वल्मीकशर्कराभिश्च वर्जिते तत् समाचरेत् ॥ ५ ॥

निःसङ्गे शल्यहीने च प्रागुदक्प्रवणे तथा ।
प्रदेशे तद् विधातव्यमालोक्य सुसमाहितैः ॥ ६ ॥

ब्राह्मणानुमते शस्ते[१] दिने स्थपतिभिः सह ।
भूमेर्विभागमालोक्य सुभगानानयेद्[२] द्रुमान् ॥ ७ ॥

न जाता ये श्मशानेषु देवतायतनेषु वा ।
अन्येष्वपि निषिद्धेषु जातान् वृक्षान् विवर्जयेत् ॥ ८ ॥

वृक्षान् प्रशस्तानानीय समीपे भर्तृवेश्मनः ।
ततो भूमिं परीक्षेत प्रशस्तां[३]मथ निन्दिताम् ॥ ९ ॥

चितायतनवल्मीकग्रामधान्यै[४]खलेषु च ।
विहारेषु च कर्तव्यमश्वानां न निवेशनम् ॥ १० ॥

भवन्ति स्वामिनः पीडा ग्रामधान्यै[५]खलेषु च ।
श्मशाने वेश्मकरणा[६]न्नराणां मृत्युमादिशेत् ॥ ११ ॥

स्थानं विहारवल्मीकविहितं स्यादनर्थकम् ।
तन्नित्यसन्तापकरं क्षयकृच्च तपस्विनाम् ॥ १२ ॥

दैवोपघातजननं स्त्रीणां च क्षयकारकम् ।
विहितं पादपैश्चैत्यैर्गृहं स्याद् भूतभीतिदम् १३ ॥

भवेद् रोगकरं भर्तुर्विहितं कण्टकि[७]द्रुमैः ।
दीर्णायामुन्नतायां च कृतं भूमौ क्षयावहम् ॥ १४ ॥

---

१. 'स्त' क. पाठः । २. 'शुभानानीय सद्रु' क, 'स्तुभागाना' ख. पाठः । ३. 'स्तां वाथ', ४. 'नाखि' ख. पाठः । ५. 'न', ६. 'णात् तुरगाणां', ७. 'क' क. पाठः ।

नतायां क्षुद्भयकरं कृतं भवति मन्दिरम् ।
तस्मात् कार्यं प्रशस्तायां भूमौ तद् वाजिवृद्धये ॥ १५ ॥

मङ्गल्यरमणीये च चतुरश्रे मनोनुगे ।
शुभे च विहितं सद्म भवेत् कल्याणकारकम् ॥ १६ ॥

निर्गच्छतो यथा वामे पार्श्वे भर्तुस्तुरङ्गमाः ।
भवन्ति कुर्यात् स्थपतिस्तथा वाजिनिवेशनम् ॥ १७ ॥

अन्तःपुरप्रदे[1]शस्य कार्यं दक्षिणतश्च तत् ।
प्र[2]वेशे दक्षिणं तेषां क्षेपितं जायते यथा ॥ १८ ॥

तथा भर्तुर्हितार्थाय कर्तव्यं सद्म वाजिनाम् ।
प्रागुदग् वा मुखं तस्य विधातव्यं [3]सतोरणम् ॥ १९ ॥

प्राग्ग्रीवकेण संयुक्तं चतुःशालमसङ्कटम् ।
दशारत्निसमुच्छ्रायमष्टारत्निप्रविस्तृतम् ॥ २० ॥

नागदन्तकसंशोभि पुरः कुड्यार्धसंयुतम् ।
पृष्ठे समग्रकुड्यं वा तत्र स्थानानि कल्पयेत् ॥ २१ ॥

तानि तु प्राङ्मुखानि स्युस्तथैवोदङ्मुखानि च ।
आयामे किष्कुमात्राणि त्रिकिष्कूणि च विस्तरात् ॥ २२ ॥

प्रांशून्नतोर्ध्वभागानि चतुरश्राणि कारयेत् ।
अग्रोच्चां सुखसञ्चारां तेषु भूमिं प्रकल्पयेत् ॥ २३ ॥

स्थानं सूत्रस्य मध्ये तु हस्तमात्रं समन्ततः ।
आस्तीर्णं च समश्लक्ष्णनीरन्ध्रैः फलकैर्दृढैः ॥ २४ ॥

धातक्यर्जुनपुन्नागककुभादिविनिर्मितैः ।
अष्टाङ्गुलसमुच्छ्रायैरध्यर्धारत्निविस्तृतैः ॥ २५ ॥

अच्छिद्रैः [4]संहतैर्बद्धैरयसा पार्श्वयोर्द्वयोः ।
अजन्तुसङ्कुलैः काष्ठै रुचकाभि(?)र्भिषङ्मतैः ॥ २६ ॥

यवसस्य भवेत् स्थानं निर्व्यूहैः स्वास्तृतं शुभैः ।
किष्कुत्रयोच्छ्रितं तत् स्यादेकान्ते सुसमाहितम् ॥ २७ ॥

---

१. 'वे' क. पाठः । २. 'दे' ख. पाठः । ३. 'सु' क. पाठः । ४. 'सहितै' ख. पाठः । ५. 'ज' क. पाठः ।

हस्तद्वयप्रमाणं च कुर्यात् खादनकोष्ठकम् ।
सूपलिप्तमदुर्गन्धि विस्तारोच्छ्राययोः समम् ॥ २८ ॥

स्थाने स्थाने त्रयः कीलाः सुदृढाः कपिशीर्षकाः ।
पश्चाङ्गीनिग्रहार्थं तौ पुरतः कल्पयेद्बुधः ॥ २९ ॥

पश्चाद् बन्धार्थमेकं च सुगुप्तं परिकल्पयेत् ।
चतुर्हस्तायतं त्यक्त्वा शालाकोणचतुष्टयम् ॥ ३० ॥

स्थानेष्वेतेषु तुरगान् सर्वेष्वपि निवेशयेत् ।
तत्र कुर्याद् बलिं होमं स्वस्तिवाचनकं जपम् ॥ ३१ ॥

ग्रीष्मे कार्यं सुसंमृष्टं सिक्तं तत्र महीतलम् ।
वर्षास्वनम्बुपङ्कं च शिशिरे संवृतं शुभम् ॥ ३२ ॥

तिष्ठेयुस्तत्र तुरगा नातिसङ्कीर्णशङ्किनः ।
अस्पृशन्तो मिथः कार्याः सर्वाबाधविवर्जिताः ॥ ३३ ॥

स्थानं दक्षिणपूर्वस्यां दिशि वह्नेः प्रकल्पयेत् ।
निदध्यादुदकुम्भं च किञ्चिदैन्द्रीसमाश्रितम् ॥ ३४ ॥

ब्राह्म्यां दिशि प्रकर्तव्यं स्थानकं धवलस्य च ।
वायव्यां तु प्रकर्तव्यं स्थानमौलूखलं दिशि ॥ ॥ ३५ ॥

निःश्रेणयः कुशाः कूर्चाः कार्याश्च कल्कसाहुताः ।
कुद्दालोद्दालपुडकाः शुक्रयोगाः क्षुरस्तथा ॥ ३६ ॥

कचग्रहण्यः भृङ्गं च तथा परशवोऽपि च ।
नाद्यौः(?) मदीपाश्च मयन्त्यश्वागारोपयोगिनः ॥ ३७ ॥

सङ्ग्रहः सुखसञ्चारवस्तूनां नैकंडतः भवेत् ।
अग्न्युपद्रवरक्षार्थं बन्धच्छेदोपयोगिनः ॥ ३८ ॥

पदार्थान् सन्निधौ कुर्याज्जलदीपादिकान् बुधः ।
भाण्डानि कुर्याच्च पृथग् जं(न्द्रा?लो)पनयनेच्छया ॥ ३९ ॥

हस्तवासीं शिलां दीपं दर्वीं फालमुपानहौ ।
पिटकानि विचित्राणि वस्तीन् नानाविधानपि ॥ ४० ॥

१. 'मौच्छाद' क, 'यौह्राद' ख. पाठः । २. 'ख', ३. 'द्या प्र', ४. 'प' क. पाठः । ५. 'ज्जव', ६. 'भाण्डापन', ७. 'विं' क. पाठः ।

एवंविधानि चान्यानि संनिदध्यात् प्रयत्नतः ।
पुरःस्तम्भाश्रितं भाण्डं सन्नाहादेर्विधीयते ॥ ४१ ॥

प्राङ्मुखे तुरगं गेहे वारुण्यां स्थापयेद् दिशि ।
पूर्वामुखे पदे वापि मित्रस्य वरुणस्य च ॥ ४२ ॥

भवन्ति तेन बहवः पुष्टिं च प्राप्नुवन्ति ते ।
सा हि दिक् पूजनीया च स्तोतव्या च प्रकीर्तिता ॥ ४३ ॥[1]

होमशान्तिकदानेषु धर्म्या याश्च पराः क्रियाः ।
तासु प्रशस्यते पूर्वा शक्रेणाधिष्ठिता स्वयम् ॥ ४४ ॥

तस्यामुदेति दिनकृदनुलोमं ततः पुनः ।
अश्वानां पृष्ठतो याति स प्रतीचीमनुक्रमात् ॥ ४५ ॥

स्नानाधिवासने पूजा माङ्गल्यानि पराणि च ।
प्राङ्मुखानां तुरङ्गाणां कर्तव्यानि शुभार्थिभिः ॥ ४६ ॥

एवं कृते भूमिवलमित्राणां यशसोऽपि च ।
वृद्धिर्भवति भूपस्य तस्मात् प्राची प्रशस्यते ॥ ४७ ॥

भर्तृवृद्धिप्रदं स्थानमग्रग्रासस्य तद् भवेत् ।
दक्षिणाभिमुखायां तु शालायां वाञ्छितार्थदम् ॥ ४८ ॥

स्थानं भवति वाहानां पदे क्लृप्तं विभावसोः ।
वह्निनाध्यासिता सा दिग् आत्मा वह्निश्च वाजिनाम् ॥ ४९ ॥

अजरो बहुभोक्ता च तत्र बद्धो भवेद्धयः ।
उदङ्मुखेऽपि भवने प्राप्नुवन्ति शुभं हयाः ॥ ५० ॥

तथास्थितानामश्वानां दक्षिणेन दिवाकरः ।
उदेत्यनन्तरं याति तान् विधाय प्रदक्षिणम् ॥ ५१ ॥

प्रयाति वामतोऽ(श्वं च?श्वानां) स्थाप्यास्तेनोत्तरामुखाः ।
चन्द्रार्कौ प्रति(हर्ष?हेष)न्ते तथा बध्नीत वाजिनः ॥ ५२ ॥

नृपतिश्च जयं सिद्धिं पुत्रानायुश्च विन्दति ।
अरोगाश्च भवन्त्यश्वा वर्धयन्ति च सन्ततिम् ॥ ५३ ॥

---

१. 'ताः' क. ख. पाठः । २. 'षु'; ३. 'ऽयगोकस्य' क. पाठः । ४. 'गृदीसो वह्निस्तु वा', ५. 'आरोग्याश्च' क. पाठः ।

दक्षिणाभिमुखान् कुर्यान्न सन्नाह्यान् न चाग्रगान् ।
पितृकार्याद्यतोऽन्यत्र दक्षिणा वर्जितैव दिक् ॥ ५४ ॥

अस्यामेव दिशि प्रेता यतः सर्वे प्रतिष्ठिताः ।
उदेति वामतो याति चास्तं दक्षिणतो रविः ॥ ५५ ॥

सोमश्च पृष्ठे भवति तेनाश्वा दैवपीडिताः ।
ग्रहैर्विकारैर्विविधैः पीड्यन्तेऽरातिविह्वलाः ॥ ५६ ॥

भयेन व्याधिभिश्चार्ता ग्रासं नेच्छन्ति खादितुम् ।
पराजयमतुष्टिं च स्वामिनोऽनर्थसङ्गतिम् ॥ ५७ ॥

कुर्वन्त्यतो न बध्नीयात् कथञ्चिद् दक्षिणामुखान् ।
पश्चिमाभिमुखानां च बद्धानां वाजिनां सदा ॥ ५८ ॥

उदेति पृष्ठतो भानुः पुरतोऽस्तं प्रयाति च ।
न भवेद् विजयस्तेन भर्तुस्तत्पृष्ठवर्तिनः ॥ ५९ ॥

शक्रस्य पृष्ठवर्तित्वात् प्रातिलोम्याच्च भास्वतः ।
कुप्यन्ति व्याधयस्तेषां तूर्णं देहविनाशनाः ॥ ६० ॥

तैस्ते ध्यायन्ति वेपन्ते जले त्रासं प्रयान्ति च ।
यवसं नाभिनन्दन्ति क्षमां मुञ्चन्ति सर्वथा ॥ ६१ ॥

दिशोऽभिमुखमाग्नेय्या बध्यन्ते यदि वाजिनः ।
व्यथन्ते रक्तपित्तोत्थैस्तदा रोगैरनेकधा ॥ ६२ ॥

जायन्ते स्वामिनो बन्धवधहृच्छोषदायिनः ।
वाजिनां च भवेत् तत्र वह्निदाहकृतं भयम् ॥ ६३ ॥

भर्तुः पराजयो विघ्नः स्याच्च देहस्य संशयः ।
नैर्ऋत्याः ककुभो वाहा बध्यन्ते संमुखं यदि ॥ ६४ ॥

तदा न तेऽभिनन्दन्ति खादनं पानभोजने ।
यथा यथा क्षितिं पादैर्दारयन्ति पुनः पुनः ॥ ६५ ॥

हेषन्ते वीक्ष्य बहुशो मनुष्यान् पक्षिणः पशून् ।
भ्रमयन्ति च गात्राणि नैर्ऋतीं चाभितः स्थिताः ॥ ६६ ॥

---

१. 'थ्य' क. पाठः । २. 'क' ख. पाठः ।

तथा तथैषां कुपिता नाशं कुर्वन्ति राक्षसाः ।
बध्यन्ते यदि वाज्ञानाद् वायव्याभिमुखं हयाः ॥ ६७ ॥

तदा ते वातिकै रोगैः पीड्यन्ते प्रतिवासरम् ।
चलः कायो भवेद् भर्तुः क्लेशश्चाश्वोपजीविनाम् ॥ ६८ ॥

नराणां च भवेन्मृत्युर्दुर्भिक्षप्रभवं भयम् ।
ऐशान्यभिमुखं बद्धाः प्रणश्यन्ति तुरङ्गमाः ॥ ६९ ॥

सूर्योदयस्याभिमुखं बद्धानां चेदमादिशेत् ।
निबध्यन्ते यदा वाहा ब्राह्मीं दिशमुपाश्रिताः ॥ ७० ॥

बध्यन्ते ते ग्रहैर्दिव्यैर्व्याधिभिश्च विचिन्तनाः ।
कव्यहव्यक्रियास्तत्र भर्तुर्न विजयावहाः ॥ ७१ ॥

द्विजानामुपतापाय जायन्ते तत्र वाजिनः ।
अनुवंशं च शालायां स्थानमश्वस्य नेष्यते ॥ ७२ ॥

स्वामिनस्तद्जीर्णाय स्यान्नाशाय च वाजिनाम् ।
स्थाने प्रशस्ते तुरगान् सर्वथा वासयेदतः ॥ ७३ ॥

नच धार्याः क्षणमपि रोगिणः कल्यसन्निधौ ।
कल्यानामपि रोगाः स्युर्यतो रोगिसमाश्रयात् ॥ ७४ ॥

हयागारस्य पूर्वेण कार्यं भेषजमन्दिरम् ।
तस्यैव वामतः सर्वसंभारान् परिकल्पयेत् ॥ ७५ ॥

वाजिनां भेषजार्थाय भाण्डानि च विनिक्षिपेत् ।
अगदानोषधीः स्नेहान् वर्तीश्च लवणानि च ॥ ७६ ॥

भेषजागारसविधे कुर्याच्चारिष्टमन्दिरम् ।
भवनं व्याधितानां च कार्यं वासाय वाजिनाम् ॥ ७७ ॥

सुगुप्तं तच्च कर्तव्यं पूर्वनिर्दिष्टवेश्मवत् ।
संबद्धं च विधातव्यमेतद् वेश्मचतुष्टयम् ॥ ७८ ॥

---

१. 'नां' क. पाठः । २. 'गे', ३. 'नि' ख. ग. पाठः ।

सुधाबन्धदृढैः कुड्यैः समाग्रीवोच्चतोरणम् ।
चत्वार्यपि विशालानि सुगमानि च कारयेत् ॥ ७९ ॥

वेश्मस्वेवंविधेष्वश्वान् स्थापितान् परिपालयेत् ॥ ७९½ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
अश्वशाला नाम त्रयस्त्रिंशोऽध्यायः ॥

## अथाप्रयोज्यप्रयोज्यं नाम चतुस्त्रिंशोऽध्यायः ।

राज्ञां सेनापतीनां च वर्णिनामपि वेश्मसु ।
यदि वा [1]वास्तुकक्षासु सभादेवकुलेषु च ॥ १ ॥

शयनासनयानेषु भाजनाभरणेषु च ।
छत्रध्वजपताकासु सर्वोपकरणेषु च ॥ २ ॥

अप्रयोज्यानि यानि स्युः प्रयोक्तव्यानि यानि च ।
विस्तरात् तानि कथ्यन्ते हितार्थमथ देहिनाम् ॥ ३ ॥

पूर्वोक्तानां नृपादीनां यानि वेश्मसु केवलम् ।
अप्रयोज्यानि तान्येव पूर्वमत्राभिदध्महे ॥ ४ ॥

तेषु नैव प्रयोक्तव्याः समस्ता अपि देवताः ।
दैत्या ग्रहास्तथा तारा यक्षगन्धर्वराक्षसाः ॥ ५ ॥

पिशाचाः पितरः प्रेताः सिद्धविद्याधरोरगाः ।
चारणा भूतसङ्घाश्च तेषां योधाः सुतास्तथा ॥ ६ ॥

प्रतीहाराः प्रतीहार्यस्तेषामधिकृताश्च ये ।
आयुधानि तदीयानि सर्वे चाप्सरसां गणाः ॥ ७ ॥

दीक्षित[2]व्रतिपाषण्डिनास्तिकाः क्षुत्प्रपीडिताः ।
व्याधिबन्धनशस्त्राग्नितैलासृक्पङ्कपांसुभिः ॥ ८ ॥

शूलज्वरादिभिश्चार्ता येऽन्येऽप्येवंविधा नराः ।
मत्तोन्मत्तजडक्लीबनग्नान्धबधिरादयः ॥ ९ ॥

१. 'वालक' ख. ग. पाठः । २. 'त' क. पाठः ।

दोलाक्रीडाश्च नेष्यन्ते ग्रहणानि च दन्तिनाम् ।
देवासुराद्याः सङ्ग्रामा विग्रहाश्च महीक्षिताम् ॥ १० ॥

प्राणियुद्धविमर्दाश्च मृगया च न शस्यते ।
रौद्रदीनाद्भुतत्रासबीभत्सकरुणा रसाः ॥ ११ ॥

न प्राणिषु प्रयोक्तव्या हास्यशृङ्गारवर्जिताः ।
हस्त्यश्वरथयानानि विमानायतनानि च ॥ १२ ॥

चण्डानलप्रदीप्तानि भवनानि वनानि च ।
वृक्षाः पुष्पफलैर्हीना विहङ्गावासदूषिताः ॥ १३ ॥

एकद्विशाखा रूक्षाश्च भग्नाः शुष्काः सकोटराः ।
कदम्बशाल्मलीशेलुतार[1]क्षारलुकादयः(?) ॥ १४ ॥

भूतालयत्वान्नेष्यन्ते कटुकण्टकिनश्च ये ।
गृध्रोलूका विहङ्गेषु कपोतश्येनवायसाः ॥ १५ ॥

कङ्कश्चे[2]ति न शस्यन्ते खगा रात्रिचराश्च ये ।
गजाश्वमहिषाश्चोष्ट्रा मार्जारखरवानराः ॥ १६ ॥

सिंहो व्याघ्रस्तरक्षुश्च वराहमृगजम्बुकाः ।
तथा वनचरा ये च क्रव्यादा मृगपक्षिणः ॥ १७ ॥

गृहेष्वेते न कर्तव्याः शैलाटव्याश्रिताश्च ये
अमीषां करणादर्थैराचार्यो विप्रमुच्यते ॥ १८ ॥

व्याधिं घोरमवाप्नोति व्यसनं बन्धमेव च ।
यत्र तत्र गृहस्वामी धनहानिं पराजै[3]यम् ॥ १९ ॥

प्रवासं बन्धनं नाशं मृत्युं वा क्षिप्रमाप्नुयात् ।
इत्युक्तान्यप्रशस्तानि गृहेषु गृहमेधिनाम् ॥ २० ॥

तत्र यानि प्रयोज्यानि कथ्यन्ते तान्यतः परम् ।
यस्य यत्र भवेद् भक्तिर्या चास्य कुलदेवता ॥ २१ ॥

हस्तक्लृप्तप्रमाणेन तान् कुर्वन् स्यान्न दोषभाक् ।
तद्द्वारपार्श्वयोः कार्यौ प्रतीहारौ स्वलङ्कृतौ ॥ २२ ॥

---

१. 'रा', २. 'श्येना न' क. पाठः । ३. 'भवम्' ख. ग. पाठः ।

वेत्रदण्डव्यग्रकरौ खड्गकोशपरिच्छदौ ।
रूपयौवनसम्पन्नौ विचित्राम्बरभूषणौ ॥ २३ ॥

धात्री वामनिका कुब्जा सखीभिः परिवारिता ।
विदूषकैः कञ्चुकिभिस्तुष्टैरनुगतास्तथा ॥ २४ ॥

द्वारस्योभयतः कार्याः प्रतीहार्यो मनोरमाः ।
निधयश्चानुरूपाश्च शङ्खाब्जोज्ज्वललक्षणाः ॥ २५ ॥

रत्नदीनारराशींश्च वहन्तो वदनोद्गतान् ।
पद्मस्था पूर्णकुम्भा वा रत्नवस्त्रविभूषिता ॥ २६ ॥

वक्त्रैरूर्ध्वस्थितैः पुष्पफलपल्लवसम्भृतैः ।
पूर्णकुम्भाङ्कुशच्छत्रश्रीवृक्षादर्शचामरैः ॥ २७ ॥

कार्याष्टमङ्गला द्वारे[1] दामभिः[2] शङ्खमत्स्ययोः ।
द्वारमण्डलमध्यस्था स्नाप्यमाना[3] गजोत्तमैः ॥ २८ ॥

पद्मासना पद्महस्ता श्रीश्च कार्या स्वलङ्कृता ।
वृषः सवत्सा धेनुर्वा सच्छत्रस्रग्विभूषणा ॥ २९ ॥

फलभक्तैर्बहुविधैराहारार्थं निवेदितैः ।
नानापुष्पफलैर्नम्रैः शालैस्तिर्यगवस्थितैः ॥ ३० ॥

चित्रा पत्रलता लेख्या बाह्याभ्यन्तरभित्तिषु ।
हंसकारण्डचक्राह्वैर्बिसिनीपत्रवर्तिभिः ॥ ३१ ॥

कुमारकैश्च क्रीडद्भिर्युक्ता ललितबाहुभिः ।
वासधाम्नि निवेश्यन्ते विचित्राभरणाम्बराः ॥ ३२ ॥

रतिक्रीडापरा नार्यो नायकस्तु यदृच्छया ।
आपाण्डुदेहच्छवयः स्वल्पचारुविभूषणाः ॥ ३३ ॥

किञ्चित्प्रतनुभिर्गात्रैः कार्याः सुरतलालसाः ।
प्रवृद्धशाखाविटपैः प्रचलारुणपल्लवैः ॥ ३४ ॥

चम्पकाशोकपुन्नागनानाम्रतिलकादिभिः ।
छायापुष्पफलोपेतैः वृक्षैरन्यैश्च भूषिताः ॥ ३५ ॥

---

१. 'रैदी' ख. ग. पाठः । २. 'वस्त्रभिः', ३. 'स्था' क. पाठः ।

उद्यानभूमयः कार्याः कूजत्पिकमधुव्रताः ।
ऋतवः फलपुष्पाद्यैः स्वैः स्वैश्चिह्नैरलङ्कृताः ॥ ३६ ॥
मनोरमैर्विशेषैश्च खगैश्च समयोचितैः ।
कादम्बकुररक्रौञ्चहंससारसमेखलाः ॥ ३७ ॥
तीरान्तोद्गतवानीरकेतकीषण्डमण्डिताः[1] ।
जलान्तलीनमत्स्यैश्च सञ्छन्ना नलिनीवनैः ॥ ३८ ॥
लेख्याश्च गृहभित्तीनामधोभागेषु दीर्घिकाः ।
फलैः[2] समं सभक्ष्यै[3]श्च मणिकाञ्चनभाजनाः ॥ ३९ ॥
विन्यस्तपद्मिनीपत्राः सोत्पलाः पानभूमयः ।
विचित्रातोद्यहस्ताश्च नृत्यगीतविचक्षणाः ॥ ४० ॥
मुदिता ललना लेख्याः प्रेक्षासङ्गीतभूमिषु ।
प्रकल्प्याः पञ्जरस्थाश्च चकोरशुकसारिकाः ॥ ४१ ॥
प्रहृष्टाः परपुष्टाश्च मयूराश्च सकुक्कुटाः ।
इति यानि प्रदिष्टानि प्रयोक्तव्यानि वेश्मनि ॥ ४२ ॥
तानि सर्वाणि शस्तानि सर्वोपकरणेष्वपि ।
देवयोनिगणास्तद्वत् पुरुषाश्च विनिन्दिताः ॥ ४३ ॥
साक्रन्दाश्च न शस्यन्ते पीठशय्यासनादिषु ।
पुरस्तात् कीर्तितान्यत्र प्रयोक्तव्यानि यानि च ॥ ४४ ॥
तानि शस्तानि कक्षासु सभादेवकुलेषु च ।
दिव्यमानुषसम्बद्धान्याख्यानाख्यायिकादिषु ॥ ४५ ॥
प्रोक्तानि तानि तावन्ति शुभान्यालेख्यकादिषु[4] ।
इति कथितमयोज्यं योजनीयं च बुद्ध्या
भवनशयनकक्षादेवधिष्ण्यादिकेषु ।
विरचयति यथोक्तं निन्दितं वर्जयेद् यः
स भवति नृपतीनां शिल्पिनां चार्चनीयः ॥ ४६[1][2] ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
अप्रयोज्यप्रयोज्यं नाम चतुस्त्रिंशोऽध्यायः ॥

१. 'नी', २. 'त' क. पाठः । ३. 'सु' ख. ग. पाठः । ४. 'षु' क. पाठः ।
५. 'र्क्ष्' , ६. 'न्धानाख्या' ख. ग. पाठः ।

# अथ शिलान्यासविधिर्नाम पञ्चत्रिंशोऽध्यायः।

अथ ब्रूमः शिलान्यासविधिमत्र यथागमम्।
तत्रोदगयने पुण्ये शुक्लपक्षे शुभेऽहनि ॥ १ ॥

स्थिरग्रहस्य दिवसे करणे च गुणान्विते।
तिष्येऽश्विनीषु रोहिण्यामुत्तरेष्वपि च त्रिषु ॥ २ ॥

रेवत्यां श्रवणे हस्ते शिलाविन्यासमाचरेत्।
स्थिरस्य राशेरुदये सौम्यमित्रावलोकिते ॥ ३ ॥

सम्यङ्निमित्तशकुनस्वस्तिपुण्याहवाचिते।
हर्षोदये च मनसः कुर्याद् वास्तोर्निवेशनम् ॥ ४ ॥

भद्रः प्रकृत्या शास्त्रज्ञः शुचिः स्नातः समाहितः।
कर्मारभेत स्थपतिः कृतदेवार्चनक्रियः ॥ ५ ॥

पूर्णां समासविकलां चतुरश्रामनिन्दिताम्।
शिलामाद्यां चये साध्वीं परीक्षेत विचक्षणः ॥ ६ ॥

कुम्भाङ्कुशध्वजच्छत्रमत्स्यचामरतोरणैः।
दूर्वानागफलोष्णीषपुष्पस्वास्तिकवेदिभिः ॥ ७ ॥

नन्द्यावर्तैः सचमरैः कूर्मपद्मनिशाकरैः।
वज्रैः प्रशस्तैः प्राकारैर्भूषिताः कर्मणो हिताः ॥ ८ ॥

दीर्घा ह्रस्वाल्पविषमा[1]छाभाध्मातापरीक्षिता[2]।
दिङ्मूढा चाङ्गहीना च सास्थ्यङ्गारा सशर्करा[3] ॥ ९ ॥

खण्डा दुः[4]पक्वनिर्भिन्ना कृष्णा दोषभयावहा[5]।
नृणां पशुतुरङ्गाणां पदाङ्काः स्वस्तिवृद्धये ॥ १० ॥

क्रव्यान्मृगविहङ्गानां पादैः स्पृष्टास्तु वर्जयेत्।
नन्दाभद्राजयापूर्णाश्चतस्रः स्युरिमाः शिलाः ॥ ११ ॥

वासिष्ठी काश्यपी तद्वद् भार्गव्याङ्गिरसीति ताः।
तत्र प्रागुत्तरे देशे संनिवेशस्य वास्तुनः ॥ १२ ॥

१. 'स्थापनाध्मा'(?) क, 'छालाध्मा' ग. पाठः। २. 'ताः' ख. ग. पाठः। ३. 'राः' क. पाठः। ४. 'क्षपनि' क, 'पक्षनि' ग. पाठः। ५. 'हाः' ख. पाठः।

नैर्ऋत्यां वा सकुसुमां समां गोचर्मसम्मिताम् ।
वेदीं सगन्धकलशां चतुरश्रां प्रकल्पयेत् ॥ १३ ॥

आग्नेय्यामादितो नन्दां स्थापयेत् क्रमशः शिलाम् ।
अकालमूलैरव्यङ्गैः सपद्मोत्पलपल्लवैः ॥ १४ ॥

सर्वौषधिहिरण्याद्यैर्हैमराजतमृन्मयैः ।
कुम्भैस्ताम्रमयैश्चापि मन्त्रैस्तामभिषेचयेत् ॥ १५ ॥

तीर्थप्रस्रवणाम्भोभिः सरत्नाक्षतपङ्कजैः ।
सुगन्धिभिः सपुण्याहमभिषेकं प्रयोजयेत् ॥ १६ ॥

जाह्नवीयमुनारेवासरस्वत्यादिसम्भ(वैः?वम्) ।
महानदीजलं शस्तं शुभतीर्थभवं तथा ॥ १७ ॥

तथाद्रिवनवेशन्तदेवायतनजानि च ।
अभिषेकार्थमम्भांसि यथालाभमुपाहरेत् ॥ १८ ॥

मन्त्रेणानेन चैतासामभिषेकं समाचरेत् ।
हिरण्यवर्णाः पावन्यः शुचयो दुरितच्छिदः ॥ १९ ॥

पुनन्तु शान्ताःश्रीमत्य आपो युष्मान्मधुच्युतः ।
मन्त्रपूतेन पयसा स्नापयित्वा ततः शिलाम् ॥ २० ॥

स्थपतिर्गन्धकल्केन मङ्गल्येनानुलेपयेत् ।
हिमचन्दनपूर्णेन व्यवकीर्य सुगन्धिना ॥ २१ ॥

तरसा छादयेदेनां सलाजैः पुष्पदामभिः ।
धूपमाल्योपहारैश्च दधिमांसाक्षतादिभिः ॥ २२ ॥

पूजयेदिष्टकां देवीं वस्त्रयुग्मैश्च पुष्कलैः ।
निवेशनान्ते नैर्ऋत्यां तदा विप्रानवस्थितान् ॥ २३ ॥

समसङ्ख्यान् शुचीन् प्राज्ञानर्चयेद् दक्षिणाफलैः ।
ओङ्कारस्वस्तिपुण्याहगीतवादित्रनिस्वनैः ॥ २४ ॥

कर्ता जनितरोमाञ्चस्तेभ्यः कुर्यान्नमस्क्रियाम् ।
निवेद्य वास्तोष्पतये भूतेभ्यश्च ततो बलिम् ॥ २५ ॥

१. 'सु' ग. पाठः । २. 'वमान्यः' क. पाठः । ३. 'चन्द्रेण पू' पाठः । ४. 'र' ग. पाठः

तासां चतसृणामन्याः कुर्यादुपशिलाः पृथक् ।
प्राकारैस्स्वस्तिकाङ्के[1] द्वे तथा श्रीवत्सलक्षणा[2] ॥ २६ ॥

नन्द्यावर्तस्तु पूर्णायां भवे(देको?दङ्को) यथाक्रमम् ।
कर्णे प्राग्दक्षिणे नन्दां वास्तुनः स्थापयेद्धः[3] ॥ २७ ॥

अन्याः क्रमेण भद्राद्याः कोणेष्वन्येषु च त्रिषु ।
प्रतिष्ठापनमन्त्राश्च तासां चतसृणामपि ॥ २८ ॥

चत्वार ऋषिभिर्गीताः शाश्वतारम्भदर्शनाः ।
वीर्येणादिवराहस्य वेदार्थैस्त्वभिमान्त्रि(ताः?ताम्) ॥ २९ ॥

वसिष्ठ[4]नन्दिनीं नन्दां प्राक् प्रतिष्ठापयाम्यहम् ।
सुमुहूर्ते सुदिवसे सा त्वं नन्दे! निवेशिता ॥ ३० ॥

आयुः कारयितुर्दीर्घं श्रियं चाढ्यामिहावह ।
भद्रासि सर्वतोभद्रा भद्रे! भद्रं विधीयताम् ॥ ३१ ॥

कश्यपस्य प्रियसुते! श्रीरस्तु गृहमेधिनः ।
जये! विजयतां स्वामी गृहस्यास्य महात्मनः ॥ ३२ ॥

आचन्द्रार्कं यशश्चास्य[5] भूम्यामिह विरोहतु ।
त्वयि सम्पूर्णचन्द्राभे! न्यस्तायां वास्तुनस्तले ॥ ३३ ॥

भवत्वेष गृहस्वामी पूर्णे! पूर्णमनोरथः ।
इति[6] मूलचं(यो?यं) मन्त्रैः कुर्यात् स्वस्तिकवाचनैः ॥ ३४ ॥

ताभिर्हिरण्यवर्णाभिः[8] शिलाभिः सममद्भुतम् ।
प्रागुदक्प्लवना धन्या न प्रत्यग्दक्षिणाप्लवा ॥ ३५ ॥

इष्टकाश्चैत्यभवनप्राकारपुरकर्मसु ।
विताने चितिविन्यासे चतुर्मुखनिकेतने[9] ॥ ३६ ॥

पुरोधाः शान्तिवेदीषु प्रतिमास्थापनेषु च ।
याज्ञिकेन विधानेन क्रमशः स्थापयेच्छिलाः ॥ ३७ ॥

१. 'रं च स्व', २. 'ज्ञेया श्री', ३. 'थ' ग. पाठः । ४. 'ष्ठं', ५. 'स्यां', ६. 'मं' क. पाठः । ७. 'भ' ख. ग. पाठः । ८. 'भिः सशिलाभिः समं द्रुतम्', ९. 'के', क. पाठः ।

§ त्रैशोकौर्णा[1]संभा(सै?ख्यै)स्ताः सामभिः स[2] महाव्रतैः ।
गायत्र्युष्णिगनुष्टुब्भिर्बृहत्या च यथाक्रमम् ॥ ३८ ॥

चयान् समस्तांश्चिनुयाच्चतुरो विरमेत् ततः ।
ज्ञात्वा भित्तिप्रमाणं च चितेश्चयचतुष्टयम् ॥ ३९ ॥

समाप्यमादिकमेवं कनिष्ठं च यथोत्तरम् ।
प्रतिष्ठितास्ताः प्रथमं भूतले सुस्थिताः समाः ॥ ४० ॥

न चालयेच्चालने स्याद् गृहभर्तुर्महद् भयम् ।
कम्पने च भयं विद्यादेतासां स्थिरतां पुनः ॥ ४१ ॥

स्थपतेर्गृहभर्तुश्च मङ्गलं परमं विदुः ।
प्रागुदक्षिणा[3]यां चलने गृहभर्तुर्महद् भयम् ॥ ४२ ॥

भार्याविनाशो नैर्ऋत्यां शून्[4]यं(?) भीतिर्मरुद्दिशि ।
गुरोश्च भयमैशान्यामपचारेऽपि तद् भवेत् ॥ ४३ ॥

प्रथमं स्थापि(तेनै?ताने)वं स्तम्भानपि न चालयेत् ।
नोद्धरेत प्रणुद्याच्च विधिस्तुल्यो यतोऽनयोः ॥ ४४ ॥

विन्यासं प्रथमं तस्मात् कुर्यात् सम्यक् समाहितः ।
शिलानां स्थपतिस्तद्वत् स्तम्भानामपि सर्वथा ॥ ४५ ॥

द्वारप्राकारशालानां नगराणां च वेश्मनाम् ।
तत्प्रमाणो विधिर्यस्मात् त[5]स्मात् तत्रादृतो भवेत् ॥ ४६ ॥

एवं शिलान्यासविधानमेतद् यथावदस्माभिरिहोपदिष्टम् ।
अस्मिन् कृते वेश्मसुरालयादि निष्पत्तिमभ्येति विनैव विघ्नम् ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
शिलान्यासविधिर्नाम पञ्चत्रिंशोऽध्यायः ॥

१. 'सु' ख. ग. पाठः । २. 'स्स', ३. 'णयोश्चाल', ४. 'न्यां', ५. 'तत्रास्मात्तत्रा' क. पाठः ।

§ 'त्रैश्लो' इति मातृकासु दृश्यते ।

# अथ बलिदानविधिर्नाम षट्त्रिंशोऽध्यायः ।

इदानीमभिधास्यामो बलिरूपविधेः क्रमम् ।
येन येनार्चिता देवास्तुष्यन्ति समहेश्वराः ॥ १ ॥

मण्डलं वास्तुनो मध्ये गोमयेन प्रकल्पयेत् ।
कलशं तत्र विन्यस्येत् सप्रसूनं सकाञ्चनम् ॥ २ ॥

वास्तुदेवास्ततः कल्प्या यथास्थाननियोगतः ।
सधूपैर्विविधैर्माल्यैरर्घ्यं पश्चान्निवेदयेत् ॥ ३ ॥

अर्चयेद् विश्वकर्माणं माल्यैर्धूपैर्विलेपनैः ।
भक्ष्यैः फलैर्बहुविधैः पूजयेत् सुसमाहितः ॥ ४ ॥

आज्येन पयसा दध्ना पूजयेच्छिखिनं पुनः ।
शालिगोधूममुद्राद्यैर्धान्यैः पर्ज्यन्यमर्चयेत् ॥ ५ ॥

जयन्तं पूजयेदाम्रद्राक्षाखर्जूरिकादिभिः ।
मालतीमल्लिकाभिश्च पूजयेत् त्रिदशाधिपम् ॥ ६ ॥

पुष्पै रक्तैस्तथा धूपै रक्तचन्दनलेपनैः ।
ततः सूर्यं जगन्नाथं पूजयेल्लोकचक्षुषम् ॥ ७ ॥

जम्बीरैर्बीजपूरैश्च नारङ्गैः पीतकैः फलैः ।
पूजयेत् सत्यनामानं देवं तेन स तुष्यति ॥ ८ ॥

मत्स्यमांसैश्च तुष्यन्ति सर्वे[2] रक्षःपुरोगमाः ।
सितैः फलैर्नारिकेलैर्भृशश्च परितुष्यति ॥ ९ ॥

गन्धधूपप्रयोगैश्च नभोनामानमर्चयेत् ।
पुष्पैः सुगन्धिभिः शुक्लैर्मारुतः परितुष्यति ॥ १० ॥

कृसरं मधुसंयुक्तं पूष्णे[3] भक्त्या निवेदयेत् ।
वितथं तु शुभैरन्यैर्मद्यमांसविवर्जितैः ॥ ११ ॥

पूजितस्तुष्टिमायाति विवस्वांश्च महामुनिः ।
पुष्पैः सपुष्पकैस्तुष्टिमवाप्नोति गृहक्षतः ॥ १२ ॥

---

१. 'यैर्भाविता', २. 'सर्व' ख. ग. पाठः । ३. 'ष' क. पाठः ।

मत्स्यमांसयुतैर्भक्ष्यैर्यमतुष्टिः सदा भवेत् ।
पुन्नागागरुधूपेन गन्धर्वानर्चयेद् बुधः ॥ १३ ॥

मृगमांसयुतैर्भक्षैर्भृङ्गराजं च तर्पयेत् ।
राजजम्बूफलैर्बिल्वैर्देवमभ्यर्चयेन्मृगम् ॥ १४ ॥

पायसैर्मधुसंयुक्तैर्मांसैर्भक्तैश्च शोभनैः ।
कर्पूरसुरभिद्रव्यगर्भैः संपूजयेत् पितॄन् ॥ १५ ॥

सपुष्पैर्मोदकैर्लाजैः पललैश्च विमिश्रितैः ।
दौवारिकं प्रयत्नेन पूजयेद् विघ्नकारकम् ॥ १६ ॥

अपूपैः शोभनैर्गन्धैर्धूपैर्माल्यैरनुत्तमैः ।
पुष्पैः कण्टकजातीनां सुग्रीवं पूजयेत् सदा ॥ १७ ॥

सपुष्पैर्ला(पं?ज)कैर्भक्ष्यैर्दधियुक्तान्नपायसैः ।
अर्चयेत् पुष्पदन्तं तु यशोवीर्यान्वितं सुरम् ॥ १८ ॥

मांसैश्च सूकरादीनां वैनतेयं सदार्चयेत् ।
वरुणं च महासत्त्वं पूजयेद् धूपचन्दनैः ॥ १९ ॥

राहुं च मांससंयुक्तैस्तर्पयेद् भक्ष्यभोजनैः ।
रुधिरेण प्रदत्तेन तुष्टिमेति शनैश्चरः ॥ २० ॥

मांसेन तु क्षयस्तुष्टिं रोगाणामधिपो व्रजेत् ।
मेदसा पूजयेद् रोगं सर्वलोकभयङ्करम् ॥ २१ ॥

वासुकिं क्षीरदानेन पूजयेत् सततं नरः ।
पूर्ववत् पूजयेद् देवं विश्वकर्माणमीश्वरम् ॥ २२ ॥

सितप्रसूनविन्यासैर्भल्लाटं पूजयेद् बुधः ।
दधियुक्तेन चान्नेन सोमं सर्वत्र पूजयेत् ॥ २३ ॥

कुबेरं धूपदानेन पूजयेत् सततं नरः ।
अदितिं च सुवर्णेन पद्मैरपि च पूजयेत् ॥ २४ ॥

अर्कमन्दारमालाभिर्वृषभं च समर्चयेत् ।
अन्येषामपि देवानामर्चनं धूपसाम्प्रतैः(?) ॥ २५ ॥

१. 'पुष्पैर्लोप' ख. ग. पाठः । २. 'ध' क. पाठः ।

सर्वपुष्पफलैश्चैषां कार्यं बुद्धिमता सदा ।
इत्येते बलयः सर्वे शान्त्यर्थं परिकल्पिताः ॥ २६ ॥

शोधने कर्षणे भूमेः साधने रूपकल्पने ।
गृहे प्रवेशने रम्ये तिथिमभ्युदयेषु च(?) ॥ २७ ॥

स्कन्धावारनिवेशेषु पुरग्रामनिवेशने ।

देवालयक्षितिपवेश्मनिवेशनेषु
प्रोक्तान् बलीन् प्रवितरेत् प्रयतः सुरेभ्यः ।
प्रारम्भमन्यमपि वास्तुगतं चिकीर्षुः
कुर्वन्निमं विधिमभीप्सितभाजनं स्यात् ॥ २८ 1/2 ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
बलिदानविधिर्नाम षट्त्रिंशोऽध्यायः ॥

---

## अथ कीलकसूत्रपातो नाम सप्तत्रिंशोऽध्यायः ।

---

वर्णानां यानि दारूणि कीलकार्थं नियोजयेत् ।
इदानीं तानि वक्ष्यामि श्रेयःकीर्त्तिहिताय च ॥ १ ॥

खदिरोदुम्बराश्वत्थशालशाकधवार्जुनाः ।
अञ्जनः कदराशोकतिनि[1]शारुणचन्दनाः ॥ २ ॥

शिरीषसर्जन्यग्रोधवेणवः कीलकर्मणि ।
पुन्नामानो द्रुमाः शस्ताः स्त्रीनामानो विगर्हिताः ॥ ३ ॥

अश्वत्थः खदिर[2]श्चैतौ विप्राणां वृद्धिकारकौ ।
रक्तचन्दनवेणूत्थकी[3]लौ क्षत्रस्य पूजितौ ॥ ४ ॥

शाकश्च खदिरश्चेति सामन्तानां हिताविमौ ।
कीलौ शालशिरीषोत्थौ वैश्यानां कीर्तितौ शुभौ ॥ ५ ॥

शूद्रजातेस्तु तिनिशधवार्जुनसमुद्भवाः ।
वैश्यवेश्मसु सौभाग्यकार्ये च स्युरशोकजाः ॥ ६ ॥

---

१. 'न' क. पाठः । २. 'राश्च ते', ३. 'लः', ४. 'तः' ख. पाठः ।

न्यग्रोधो वणिजां धाम्नि भूमिकर्मण्युदुम्बरः ।
महामा(त्री?त्रा)श्ववैद्यानां कीलाः सर्जार्जुना गृहे ॥ ७ ॥

विप्राणां सर्ववर्णोत्थाः क्षत्रियाणां त्रिवर्णजाः ।
वर्णद्वयोक्ता वैश्यानां शूद्राणां स्वानुलोमतः ॥ ८ ॥

प्रतिलोमा न कर्तव्याः कीलका भूतिमिच्छता ।
प्रमाणान्यथ कीलानां निगद्यन्ते पृथक् पृथक् ॥ ९ ॥

द्वात्रिंशदङ्गुलाः कीला विप्राणां स्युः शुभावहाः ।
क्षत्रियाणां पुनश्चाष्टाविंशत्यङ्गुलसम्मिताः ॥ १० ॥

चतुर्विंशत्यङ्गुलाश्च वैश्यानां शुभदायिनः ।
विंशत्याद्यङ्गुलैः कीलाः शूद्रजातेस्तु ते हिताः ॥ ११ ॥

षडङ्गुलपरीणाहाः सर्वेष्वेते शुभावहाः ।
ब्राह्मणक्षत्रियविशां वेदाष्टाश्रषडश्रयः ॥ १२ ॥

षडश्रयस्तु शूद्रस्य प्रकृतेस्तु यदृच्छया ।
दार्भमौञ्जौर्णकार्पासं विप्रादीनां यथाक्रमम् ॥ १३ ॥

अर्धपर्वपरीणाहं दृढं सूत्रं तु वर्तितम् ।
अलाभे स्वस्य सूत्रस्य प्रोक्तादन्यतमं बुधः ॥ १४ ॥

गृह्णीयात् सूत्रमन्ये तु गृह्णीयुः स्वेच्छयैव ते ।
इत्थं संभृत्य सम्भारान् गृहभर्ता शुभेऽहनि ॥ १५ ॥

शुक्लपक्षे शुचिः स्नातः स्थपतिश्च सिताम्बरः ।
गृहस्थाननिमित्तात् तु देवस्थानानि लक्षयेत् ॥ १६ ॥

कुसुमाक्षतमर्घ्यैश्च कर्तव्या गृहदेवताः ।
आदौ स्थानानि शङ्कूनां परीक्षेत समन्ततः ॥ १७ ॥

तेषु सर्वेषु कर्तव्यमर्चनं तु यथाविधि ।
गृहस्य मध्ये सिक्त्वा तु निरूप्य ब्रह्मणः पदे ॥ १८ ॥

गोमयेन समालिप्तां कुर्याद् वेदीं सुलक्षणाम् ।
चतुरश्रां चतुर्द्वारामक्षतैः सुप्रतिष्ठिताम् ॥ १९ ॥

---

१. 'स्वविविद्यानां' ख., 'स्ववैविद्यानां' ग. पाठः । २. 'दशाश्रष', ३. 'क्षिपेस्तु', ४. 'ना', ५. 'त्ता तु', ६. 'प्यश्वक' ख. ग. पाठः ।

तस्या मध्ये प्रतिष्ठाप्यः कुम्भो हैमोऽथ राजतः ।
ताम्रको मृन्मयो वापि पूर्वालाभे परः परः ॥ २० ॥

अकालमूलः सोऽव्यङ्गो जलपूर्णः स्वलङ्कृतः ।
मणिरत्नप्रवालैश्च स्वर्णरूप्येण गर्भितः ॥ २१ ॥

प्रतिष्ठा(प्या?प्योऽ)क्षतैः पुष्पफलबीजसमन्वितः ।
श्वेतेन चन्दनेनैनं चर्चयित्वा समन्ततः ॥ २२ ॥

तस्योपरिष्टाद् विन्यस्येत् क्षीरवृक्षस्य पल्लवम् ।
सुगन्धिनार्थं[1] धूपेन धूपयित्वा चतुर्दिशम् ॥ २३ ॥

वेष्टयेदहतेनैनं शुक्लवस्त्रेण सर्वतः ।
वास्तुमध्ये यतो ब्रह्मा कुम्भरू(पं?पः)स तिष्ठति ॥ २४ ॥

कुम्भस्योत्तरभागे तु कीलकान् स्थापयेद् बुधः ।
कीलानष्टौ[2] परीक्षेत स्थापयेच्च यथाविधि ॥ २५ ॥

श्वेतचन्दनलिप्तांस्ता[3]न् श्वेतपुष्पैर्विभूषयेत् ।
सालक्तकान्[4] सुरभिणा धूपेन च सुधूपितान् ॥ २६ ॥

ऊर्णामयेन सूत्रेण त्रिवर्णेनाभिवेष्टयेत् ।
मधुसर्पिर्दधिक्षीरैर्मूलभागेषु लेपयेत् ॥ २७ ॥

अर्चयेत् परशुं सूत्रमष्ठीलादीनि[6] सर्वतः ।
अथोपकरणान्यत्र धूपपुष्पाक्षतादिभिः ॥ २८ ॥

ततः पूर्वोत्तरे वास्तोर्भागे सप्तार्चिषः पदे ।
गोमयेन समालिप्ते कुशास्तरणमास्थितः ॥ २९ ॥

अग्निकार्यं प्रकुर्वीत पुरोधाः शान्तिमेव च ।
सांवत्सरः शुचिः स्नातः कृतस्नानः(?) समाहितः ॥ ३० ॥

शङ्कुना साधयेल्लग्नं सम्यक् तद्घटिकाथवा(?) ।
रात्रिलग्नं तु नक्षत्रैर्मध्यास्तोदयसंश्रितैः ॥ ३१ ॥

१. 'च', २. 'यवीश्वेत'(?) ख. ग. पाठः । ३. 'तास्ते श्वे', ४. 'काः', ५. 'ताः' क. पाठः । ६. 'ष्ठीलावानि' ख. ग. पाठः । ७. 'रशुचि': ८. 'ङ्कुंतसा', ९. 'तं खाटि' ख. ग. पाठः ।

एवं संसाधयेल्लग्नं यदीच्छेत् सिद्धिमात्मनः ।
पूजया तुष्टिकारिण्या पूजयेच्च पुरोहितम् ॥ ३२ ॥

अभ्यर्चिते यतस्तस्मिन् ब्रह्मा भवति पूजितः ।
सांवत्सरस्य कर्तव्या ततः पूजा यथाविधि ॥ ३३ ॥

सांवत्सरेऽर्चिते यस्मात् पूजितः स्याद् बृहस्पतिः ।
स्थपतिं पूजयेत् पश्चात् त्वष्टृतुष्टिचिकीर्षया ॥ ३४ ॥

तदधीनं यतः कर्म शुभं वा यदि वाशुभम् ।
श्वेतचन्दनदिग्धांस्तान् श्वेतपुष्पैश्च पूजितान् ॥ ३५ ॥

सदशैरहतैर्वस्त्रैरङ्गुलीयैः प्रपूजयेत् ।
परिकर्मकरा ये च तान् यथाशक्ति पूजयेत् ॥ ३६ ॥

हेम्ना वस्त्रादिदानैश्च वाग्मिर्वा परितोषयेत् ।
यथा सुमनसस्ते स्युस्तथा कर्तव्यमादरात् ॥ ३७ ॥

ततः स्थपतिराचम्य बलिकर्म समाचरेत् ।
सूत्रपाते बलिं धीमान् सार्वभौतिकमाचरेत् ॥ ३८ ॥

तस्यालाभे बलिः कार्यो[1] यो भवेत् सोऽभिधीयते ।
विदधीत चरून् श्वेतरक्तपीतासितान् पृथक् ॥ ३९ ॥

पायसं कृसरं क्षीरं निष्पावान् श्वेतमोदनम् ।
पाविकां[2]दधिरू[3]पांश्च पललोल्लापिकाघृ[4]तम् ॥ ४० ॥

दध्योदनं च संमिश्रं देवताभ्यो निवेदयेत् ।
तिलैर्घृतेन सहितैर्देवमग्निं च पूजयेत् ॥ ४१ ॥

ततश्च पायसं दध्ना ब्रह्मस्थाने निवेदयेत् ।
ततश्चानुक्रमेणैव देवताभ्यो बलिं हरेत् ॥ ४२ ॥

बलिकर्म यथान्यायं कृत्वा च द्विजवाचनम् ।
स्वशाखीयान् शुचीन् प्राज्ञान् पूजयेद् दक्षिणाफलैः ॥ ४३ ॥

ओङ्कारस्वस्तिपुण्याहैर्गीतवादित्रनिस्वनैः ।
ततो विप्रैः सह स्वामी कुर्यात् तस्य प्रदक्षिणम् ॥ ४४ ॥

१. 'र्ये' ख. ग. पाठः । २. 'त्रि' ख. पाठः । ३. 'दध्यरू' ख. ग. पाठः ।
४. 'मृ' क. पाठः ।

अक्षतान् प्रथमं कुम्भे दापयित्वा द्विजोत्तमैः ।
ततो दक्षिणपूर्वेण गत्वा पुण्याहवाचकैः ॥ ४५ ॥

अहताम्बरसंवीतः शुचिः स्थपतिरासने ।
निषद्य प्राङ्मुखः श[2]ङ्कुं धृत्वा दक्षिणपाणिना ॥ ४६ ॥

पश्चादादाय वामेन प्रतिष्ठाप्य च भूतले ।
मन्त्रानमून् जपन् वीरो हन्यात् परशुना ततः ॥ ४७ ॥

विशन्तु ते तलं नागा लोकपालास्तथैव च ।
प्रतिष्ठन्तु गृहं चास्मिन्नायुर्बलकरं भवेत् ॥ ४८ ॥

प्रहारान् सुस्थिरानष्टौ दद्यात् कीलस्य मूर्धनि ।
हन्यमाने ततः कीले निमित्तान्युपलक्षयेत् ॥ ४९ ॥

गोविप्ररथनागाढ्याः कन्या नृपवरा[3]स्त्रियः ।
शङ्खदुन्दुभिवंशानां तथा गीतस्य च ध्वनिः ॥ ५० ॥

आविर्भवति यद्यस्मिन् हन्यमाने प्रभुस्तदा ।
सततं सुखमाप्नोति शा[4]न्त्यैश्वर्यैश्च वर्धते ॥ ५१ ॥

हतं क्षुतं विपन्नं वा निषेधः सूत्रकीलयोः ।
पाषण्डिनां च सर्वेषां दर्शनं न सुखावहम् ॥ ५२ ॥

दृष्ट्वा शुभनिमित्तानि ततः शङ्कुं निवेशयेत् ।
हन्यमानो यदा कीलो विशेद् भूमौ शनैः शनैः ॥ ५३ ॥

कर्मसिद्धिर्भवेत् तत्र गृहं रत्नपरिच्छदम् ।
हन्यमानोऽपि न विशेद् धरित्रीं कीलको यदा ॥ ५४ ॥

न तत्र कर्मसिद्धिः स्यादनिमित्तं च लक्षयेत् ।
एकेनापि प्रहारेण यत्र कीलो विशेन्महीम् ॥ ५५ ॥

न[5] सिद्धिं याति तत्रैकः कृतं वा नोपभुज्यते ।
आयस्याष्ठीलया हन्यान्न काष्ठेन कथञ्चन ॥ ५६ ॥

काष्ठेन ताडितः कीलो वह्निदोषकरो भवेत् ।
अश्मना यदि ताड्येत तदा व्याधिं प्रयच्छति ॥ ५७ ॥

---

१. 'कुम्भं' क. पाठः । २. 'ज्व' ख., 'ज्ञ' ग. पाठः । ३. 'रः' क. पाठः ।
४. 'शान्तैश्च' क, शान्त्यर्थैश्च', ख. ग. पाठः । ५. 'स' ख. ग. पाठः ।

ऐन्द्रीं प्रतिनतः कीलो धनसम्मानकारकः ।
आग्नेय्यां प्रणते कीले भवत्यग्निभयं महत् ॥ ५८ ॥
याम्यायां मरणं राज्ञां दिशि राक्षसतो भयम् ।
धननाशस्तु वारुण्यां वायव्यां रोगतो भयम् ॥ ५९ ॥
सौम्यं सौम्यानते राजप्रसादायेशतो गतः ।
कीलके कूर्चके जाते पुत्रपौत्रान्वयैर्गृहे ॥ ६० ॥
परमामृद्धिमाप्नोति धनधान्यैश्च वर्धते ।
हन्यमानो यदा यत्नात् कीलः कश्चिदपि स्फुटेत् ॥ ६१ ॥
नाशं विद्यात् तस्य पत्न्या ज्येष्ठस्य तनयस्य वा ।
यदि भज्येत कीलः स्यात् स्वामिनो जायते वधः ॥ ६२ ॥
यदा कीलः पतेद्धस्ताद् भ्रंशः स्यात् स्थपतेस्तदा ।
हस्तभ्रष्टश्चे(?) स भवेदष्टीले हस्तविच्युते ॥ ६३ ॥
सुखेन हन्यमानश्चेत् कीलः स्वस्थो न जायते ।
अष्टौ प्रहारानपरांस्तस्य दद्यात् तदा पुनः ॥ ६४ ॥
स्रग्गन्धधूपोपहारैः कुर्याच्च परिषेचनम् ।
इदं साम महापुण्यं परिचिन्त्य समासतः ॥ ६५ ॥
त्रैशोकं तु जपेद् विद्वान् यावच्छङ्कभिषेचनम् ।
गत्वाथ नैर्ऋतीमाशां ततः शङ्कुं निवेशयेत् ॥ ६६ ॥
ऊर्णायवेन साम्नास्य सम्यक् स्नपनमाचरेत् ।
वायोर्दिशं ततो गत्वा तत्र शङ्कुं निवेशयेत् ॥ ६७ ॥
अभिषेकं महारत्नसाम्ना तस्य समाचरेत् ।
अथैशानीं दिशं गत्वा शङ्कुं तस्यां निवेशयेत् ॥ ६८ ॥
भाग्रेण साम्ना कुर्वीत प्राग्वत् तस्याभिषेचनम् ।
ततोऽनु सूत्रं बध्नीयात् सव्यं द्विगुणवेष्टितम् ॥ ६९ ॥
प्रदक्षिणं प्रसार्यैतदुक्तः शङ्कुक्रमो यथा ।
(म?व)ध्यमानं यदा सूत्रं शङ्कुः किमपि मुञ्चति ॥ ७० ॥

१. 'च गते' ख. ग. पाठः । २. 'च' ख. पाठः । ३. 'लस्यात्', ४. 'स्य', ५. 'लतुस्थो', ६. 'वर्त्य स' क. पाठः । ७. 'यवेशान' क, 'यैवेन' ख. पाठः । ८. 'प्राग्वत् (स्नानं स)माप्य' क. पाठः । ९. 'ङ्कुः' ख. ग. पाठः ।

तदा पुत्रवधं विद्याच्छिन्नं स्वस्वामिमृत्यवे ।
तस्माद् यत्नः प्रकर्तव्यो यावत् सूत्रं प्रसार्यते[1] ॥ ७१ ॥

चतुर्णामपि बाहूनां पोषं(?)छिन्नं न दुष्यति ।
सूत्रं प्रसार्य वितरेच्चरून्[2] पूर्वं प्रकल्पितान् ॥ ७२ ॥

स्वेषु स्वेषु ततः स्थानेष्वनेन विधिना बुधः ।
शङ्कुस्थानेषु दातव्याः सिताद्याश्चरवः क्रमात् ॥ ७३ ॥

प्राग्दक्षिणस्या विदिशो[3] मन्त्रं चेमं हृदा जपेत् ।
मारुतानां च सर्वेषां मानवानां तथैव च ॥ ७४ ॥

बलिं तेषु प्रयच्छामि मन्त्रेण परिमन्त्रितम् ।
रक्तं बलिमुपादाय नैर्ऋत्यभिमुखस्तथा ॥ ७५ ॥

नैर्ऋत्यधिपतिश्चैव नैर्ऋत्यां ये च राक्षसाः ।
बलिं तेषु प्रयच्छामि रक्तमोदनमुत्तमम् ॥ ७६ ॥

कृष्णं बलिमुपादाय गत्वा च दिशमानिलीम् ।
नमस्ते नागराजाय ये चान्ये तं समाश्रिताः ॥ ७७ ॥

बलिं तेषु प्रयच्छामि कृष्णमोदनमुत्तमम् ।
बलिमुद्धृत्य हारिद्रमैशानीमाश्रयन् दिशम् ॥ ७८ ॥

नमो रुद्रेषु सर्वेषु ये चान्ये तान् समाश्रिताः ।
प्रयच्छामि बलिं तेषां हारिद्रौदनमुत्तमम् ॥ ७९ ॥

एवमेतान् बलीन् सर्वान् यथावत् प्रतिपादयेत् ।
ततः कुम्भोदकं पुण्यं साम्ना दिव्येन मन्त्रयेत् ॥ ८० ॥

वामदेव्येन कुर्वीत प्रोक्षणं तेन वास्तुनः ।

द्रुमा विप्रादीनामिति निगदिताः शङ्कुघटने
फलं यच्छङ्कोश्च स्फुटमिह निमित्तानि बहुशः ।
तथा सूत्राताने विधिरनु च मन्त्रैः प्रतिदिशं
बलिः कीलेषूक्तस्त्रिदशपरितोषाय विधिवत् ॥ ८१[1][2] ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे

कीलकसूत्रपातो नाम सप्तत्रिंशोऽध्यायः ॥

---

१. 'रयेत्' क पाठः । २. 'नू' ख. ग. पाठः । ३. 'र्वि' क. पाठः ।
४. 'शेन द्वि' ख. ग. पाठः ।

# अथ वास्तुसंस्थानमातृका नामाष्टात्रिंशोऽध्यायः ।

इदानीमभिधास्यामो वास्तुसंस्थानमातृकाम् ।
निवासहेतवे सम्यक् सर्वकर्मोपजीविनाम् ॥ १ ॥

चतुरश्रं समं * साचि दीर्घं वृत्तं च शम्बुकम् ।
शकटाक्षभगादर्शवज्रकन्थाकृतीनि च(?) ॥ २ ॥

छिन्नकर्णं विकर्णं च शङ्खाभं क्षुरसन्निभम् ।
[1]शक्त्याननं कूर्मपृष्ठं सदंशं व्यजनाकृति ॥ ३ ॥

शरावस्वस्तिकाकारं मृदङ्गपणवोपमम् ।
विशर्करं कबन्धाभं यवमध्यसमाकृति ॥ ४ ॥

उत्सङ्ग(रा?ग)जदन्ताभे तथा परशुसन्निभम् ।
विस्रावितं च श्वभ्रं च † प्रलम्बं च विवाहिकम् ॥ ५ ॥

त्रिकुष्टं पञ्चकुष्टं च परिच्छिन्नं तथापरम् ।
दिक्स्वस्तिकाभं श्रीवृक्षं वर्धमानसमाननम् ॥ ६ ॥

एणीपदं न[3]रपदं चत्वारिंशत् समासतः ।
क्षेत्राण्युक्तान्यथामीषां विनियोगो विधीयते ॥ ७ ॥

चतुश्रे समे राजा शय्याकारे पुरोहिताः ।
दीर्घे कुमारकाः सेनापतिर्वृत्तायते वसेत् ॥ ८ ॥

वसेयुः शम्बुकाकारे सर्वे वाहाः सुखार्थिनः ।
अन्तःपुरं सद्म समे वाणिजाः शकटाकृतौ ॥ ९ ॥

वेश्यास्तु भगसंस्थाने दर्पणाभे सुवर्णकृत् ।
संस्थानतो वज्रसमे जना नगरगोष्ठिकाः ॥ १० ॥

वसेयुः ‡ शङ्खसंस्थाने क्षेत्रे पुत्राभिलाषिणः ।
छिन्नकर्णे महामात्रा विकर्णे मृगलुब्धकाः ॥ ११ ॥

शङ्खाभे चैकदृश्वानो गणाचार्याः क्षुरोपमे ।
त्र(ता?जां)ध्यक्षः शक्तिमुखे कूर्मपृष्ठे तु मालिकाः ॥ १२ ॥

---

१. 'संयातं', २. 'संक्षामनं', ३. 'व' ख. ग. पाठः ।

---

* पूर्वाध्यायोपान्तिमश्लोकादारभ्या चत्वारिंशाध्यायावसानात् क. पाठो लुप्तः, ख. गयो-स्तु 'विनियोगो' ऽस्य 'ति लभ्यते । † विनियोगे पुनरिदं न लभ्यते । ‡ उपर्यपीदं विनियुक्तम् ।

सदंशे सौचिका वाजिपोषका व्यजनोपमे ।
तक्षा[1]णश्च शरावाभे स्वस्तिके वन्दिमागधाः ॥ १३ ॥

पणवाभे मृदङ्गाभे वेणुतूर्यादिवादकाः ।
विशर्करे[2] तु रथिनः कबन्धप्रतिमे पुनः ॥ १४ ॥

नीचाः श्वपाकाश्च यवप्रतिमे धान्यजीविनः ।
उत्सङ्गे श्रमणा हस्त्यारोहिणो (रा?ग)जदन्तके ॥ १५ ॥

परशुप्रतिमे क्षेत्रे बन्धनागारिणो जनाः ।
विस्राविणि सुराकाराः श्वभ्राभे कर्मकारिणः ॥ १६ ॥

युगले नापिताः स्वा[3]विवाहव्ये(?)कोशरक्षिणः ।
त्रिकुष्टे पञ्चकुष्टे च वसेयुर्वह्निजीविनः ॥ १७ ॥

समन्ततः § परिच्छन्ने सर्वे मानोपजीविनः ।
दिक्स्वस्तिके तु चैत्यानि कुर्याद् वासांश्च सर्वशः ॥ १८ ॥

श्रीवृक्षप्रतिमे वृक्षान् यज्ञवाटांश्च कारयेत् ।
वर्धमानाकृतिमुखेऽप्येतानेव प्रकल्पयेत् ॥ १९ ॥

एणीपदे तु गणिकाश्चौरान् नरपदोपमे ।
इत्युक्ताः शुभदा वासाः सर्वकर्मोपजीविनाम् ॥ २० ॥

कर्मोपजीविजनवासनिमित्तमेताः
क्षेत्राकृतीरभिहिताः प्रविमृश्य तेषाम् ।
वेश्मानि कारयति यः स्थपतिर्यथाव-
न्मान्यः स कस्य न भवेदिह भूमिपृष्ठे ॥ २१ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे

वास्तुसंस्था(प?)नमातृकानामाष्टात्रिंशोऽध्यायः ॥

१. 'क्षणाश्च', २. 'भे' ख. ग. पाठः । ३. 'स्वाधि वा' ग. पाठः ।

§ 'परिच्छिन्नामि'ति लक्ष्ये पठितम् ।

# अथ द्वारगुणदोषो नामैकोनचत्वारिंशोऽध्यायः ।

गृहाण्युक्तानि सर्वेषामेवं कर्मोपजीविनाम् ।
वर्णिनां च गृहस्थानां कथ्यन्तेऽतः परं यथा ॥ १ ॥

भल्लाटे धनदे यद्वा चरके पृथिवीधरे ।
ब्राह्मणस्य भवेद् वेश्म माहेन्द्रद्वारमुत्तमम् ॥ २ ॥

माहेन्द्रेऽर्केऽथ सत्ये वा आर्यके[1] वा निकेतनम् ।
कार्यं गृहक्षतद्वारं क्षत्रियस्य शुभावहम् ॥ ३ ॥

याम्ये वैवस्वते वापि गान्धर्वेऽथ गृहक्षते ।
वैश्यस्य भवनं कार्यं द्वारं पुष्पाह्वये शुभम् ॥ ४ ॥

वारुणे पौष्पदन्ते वा यद्वा मैत्रेऽथवासुरे ।
शूद्रस्य सदनं कार्यं भल्लाटद्वारमुत्तमम् ॥ ५ ॥

विप्राणां प्राङ्मुखं वास्तु गृहं स्याद् दक्षिणामुखम् ।
वर्धते धनधान्येन पुत्रपौत्रैश्च नित्यशः ॥ ६ ॥

दक्षिणाभिमुखं वास्तु भवनं पश्चिमामुखम् ।
क्षत्रियस्य धनं धान्यं विक्रमश्चेह वर्धते ॥ ७ ॥

वास्तुनः पश्चिमं द्वारं भवनस्योत्तरामुखम् ।
तत्रैधते धनैर्धान्यैः पुत्रपश्वादिभिश्च विट् ॥ ८ ॥

वास्तु स्यादुत्तरद्वारं गृहं पूर्वामुखं तथा ।
शूद्रस्य कर्मवृत्तिस्तु धनधान्यैर्विवर्धते ॥ ९ ॥

एकस्यामपि शालायां चत्वारः संप्रकीर्तिताः ।
निवेश्यद्वारभागाश्च[2] कथ्यन्ते च शुभाशुभाः ॥ १० ॥

उत्सङ्गो हीनबाहुश्च पूर्णबाहुस्तथापरः ।
प्रत्यक्षायश्चतुर्थश्च[3] निवेशः परिकीर्तितः ॥ ११ ॥

उत्सङ्ग †एवदीक्षाभ्यां(?) द्वाराणां वास्तुवेश्मनोः ।
स सौभाग्यप्रजावृद्धिधनधान्यजयप्रदः ॥ १२ ॥

---

१. 'स्ते' ख. ग. पाठः । २. 'श्यगृहद्वाराश्च', ३. 'क्षो' ख. पाठः ।

---

† 'एकादिक्काभ्यां द्वाराभ्याम्' इति पाठः स्यात् ।

यत्र प्रवेशतो वास्तु(?)गृहं भवति वामतः
तद्धीनबाहुकं वास्तु निन्दितं वास्तुचिन्तकैः ॥ १३ ॥

तस्मिन् वसन्नल्पवित्तः स्वल्पमित्रोऽल्पबान्धवः ।
स्त्रीजितश्च भवेन्नित्यं विविधव्याधिपीडितः ॥ १४ ॥

वास्तुप्रवेशतो[1] यत् तु गृहं दक्षिणतो भवेत् ।
प्रदक्षिणप्रवेशत्वात् तद् विद्यात् पूर्णबाहुकम् ॥ १५ ॥

तत्र पुत्रांश्च पौत्रांश्च धनधान्यसुखानि च ।
प्राप्नुवन्ति नरा नित्यं वसन्तो वास्तुनि ध्रुवम् ॥ १६ ॥

गृहपृष्ठं समाश्रित्य वास्तुद्वारं यदा भवेत् ।
प्रत्यक्षायस्त्वसौ निन्द्यो वामावर्तप्रवेशवत् ॥ १७ ॥

ब्राह्मणो निवसेन्मुख्ये द्विनाम्नि क्षत्रियो वसेत् ।
वितथे निवसेद् वैश्यः शूद्रः सुग्रीवनामनि ॥ १८ ॥

एते वैशेषिकाः सर्वे वर्णानामनुपूर्वशः ।
वास्तुद्वारनिवेशाश्च वासैः सह निरूपिताः ॥ १९ ॥

यथोत्तरमथोच्यन्ते वर्णानां गृहकल्पनाः ।
†शूद्रविट्क्षत्रियाणां च राज्ञां च जयकाङ्क्षिणाम् ॥ २० ॥

सार्ध[2]त्रिभूमि शूद्राणां[3] वेश्म कुर्याद् विभूतये ।
अतोऽधिकतरं यत् स्यात् तत् करोति कुलक्षयम् ॥ २१ ॥

वैश्यस्य वर्धयेद् गेहमर्धपञ्चमभूमिकम् ।
अतिप्रमाणे तत्रास्य धनबन्धुपरिक्षयः ॥ २२ ॥

क्षत्रियस्य गृहं कुर्यादर्धषष्ठतलं परम् ।
सम्पद्बलसमृद्ध्यै तदतिरिक्तं तु तच्छिदे ॥ २३ ॥

परं विप्रस्य भवनमर्धसप्तमभूमिकम् ।
स्वाध्यायाचारभोगार्थमत्युच्चं तु भयावहम् ॥ २४ ॥

यजन्ते राजसूयाद्यैः क्रतुभिर्येऽवनीश्वराः ।
तलैरर्धाष्टमैस्तेषां कारयेद् भवनोत्तमम् ॥ २५ ॥

१. 'शि' २. 'र्धं', ३. 'द्रेण वे' ख. ग. पाठः ।

† 'शूद्रविट्क्षत्रविप्राणां राज्ञाम्' इति पाठः स्यात्

आहर्तानेकयज्ञानां राजा राजाधिपश्च यः ।
तस्याप्यर्धाष्टमतलं भवनं सन्निवेशयेत् ॥ २६ ॥

वाजपेयेन वा यष्टा यो द्विजः स्यात् समाहितः ।
गवां कोटिप्रदो[1] यो वा सोऽपि तस्मिन् भवे(द्यु?द)भीः[2] ॥ २७ ।

यथाप्रमाणनिर्दिष्टे वसन्तस्ते नृपादयः ।
प्राप्नुवन्ति परामृद्धिमवृद्धिं तु विपर्यये ॥ २८ ॥

सपीठतलकं वेश्म मानतः संप्रकीर्तितम् ।
साधारणेन हस्तेन परं शूद्रस्य विंशतिः ॥ २९ ॥

चत्वारिंशद् विशः षष्टिः क्षत्त्रियस्य प्रशस्यते ।
अशीतिर्द्विजमुख्यस्य[3] शतहस्ता महीपतेः ॥ ३० ॥

नातः परं नृणामूर्ध्वप्रमाणं शस्तमुच्यते ।
देवदानवदैत्यानां पिशाचोरगरक्षसाम् ॥ ३१ ॥

सिद्धगन्धर्वयक्षाणां विधातव्यमतोऽधिकम् ।
एकभौमादधो नैव गृहं शूद्रस्य विद्यते ॥ ३२ ॥

वैश्यस्य भवनं कार्यमधो ना(न्य?ध्य)र्धभूमिकात् ।
द्विभूमिकादधः कार्यं क्षत्त्रियस्य न मन्दिरम् ॥ ३३ ॥

सार्धद्विभौमाद् विप्रस्य त्रितलादपि भूपतेः ।
हीनप्रमाणादमुतो गृहं यत् कुशिल्पिना स्याद् विहितं कथञ्चित् ।
भर्तुर्भिये सिद्धिविनाशनं[4] तत् प्रशस्तशीलादिविपर्ययाय ॥ ३४ ॥

गुणदोषान् प्रवक्ष्यामि द्वाराणां सर्ववास्तुषु ।
सुस्थितं चतुरश्रं च कान्तं स्वद्रव्ययोजितम् ॥ ३५ ॥

ऋजु[5] स्वकीयदिग्भागे नह्रस्वं[6] नतथोच्चकैः ।
नाल्पं नकुब्जं नाप्यनि(?)पिण्डितं नबहिर्गतम् ॥ ३६ ॥

नाध्मातं नकृशं मध्ये गतं नान्तरकुक्षिषु ।
नविद्रुतं नसंक्षिप्तं यत् तत् स्याद् द्वारमृद्धिदम् ॥ ३७ ॥

---

१. 'टिःप्रदेया वा', २. 'भवेदुभी ।', ३. 'तिर्द्वयमु', ४. 'द्वित्रिवि'(?), ५. 'जू', ६. 'स्वे' ख. ग. पाठः ।

पदस्य द्वादशे भागे पदमध्यात् प्रदक्षिणम् ।
स्थापितं वृद्धिमायाति द्वारं पुष्टिं करोति च ॥ ३८ ॥

रथ्याचत्वरशृङ्गाटवापीकूपाह(?)कुम्भकैः ।
कुड्यकोणतरुस्तम्भैर्भवन[1]स्यन्दनादिभिः ॥ ३९ ॥

यद् विद्धं भवनद्वारं तच्छुभाय न जायते ।
द्वारं द्वारे प्रविष्टं च कर्तव्यं वितनेतन(?) ॥ ४० ॥

[2]पेद्यां प्रवेशये[3]न्नैकामन्यद्वारे कदाचन ।
द्वारं प्रवेशयेत् पेद्यां नारोहणगवाक्षयोः ॥ ४१ ॥

पक्षद्वारस्य वा नैकां कथञ्चिदपि बुद्धिमान् ।
न बाह्यगान्तरे द्वारे प्रविष्टं कारयेत् क्वचित् ॥ ४२ ॥

विहितं हि तथा तत् स्याद् बहुदोषकरं सदा ।
तोरणं गोपुरद्वा[4]रैमट्टो येषां गृहे भवेत् ॥ ४३ ॥

गृहाणां मौलिकद्वारं श्रोत्रे चैतान् प्रवेशयेत् ।
द्वारं द्वारस्य कर्तव्यमुपर्युपरि भूमिषु ॥ ४४ ॥

प्रदक्षिणेन वा कार्यं कार्यं नापरथा पुनः ॥ ४५ ॥
उपर्युपरिभूमीनां मुखं कुर्यात् प्रदक्षिणम् ।
नापसव्येन कुर्वीत द्वारमारोहणानि च ॥ ४६ ॥

यस्यां भित्तौ कृतं पूर्वं तस्यामुपरि कारयेत् ।
तथान्यभित्तौ तद्द्वारं विधातव्यं प्रदक्षिणम् ॥ ४७ ॥

न मध्ये सद्मनो द्वारं कुर्यादेव पदस्य च ।
न स्थू[5]ले(?) न पदे नापि सिरापाते तदिष्यते ॥ ४८ ॥

निरंशावस्थितैर्द्रव्यै[6]स्तियक्(का?क्रा)न्तैश्च मन्दिरे ।
मर्मवेधो न दोषाय द्वारवेधोऽथवा क्वचित् ॥ ४९ ॥

यवनाट्टालकच्छाया पुर[7]दैवकुलस्य च ।
न प्रवेश्या गृहद्वारे रश्मयः सोमसूर्ययोः ॥ ५० ॥

---

१. 'नो' ख. ग. पाठः । २. 'ऐन्द्यां प्र' ग. पाठः । ३. 'नै', ४. 'रं पट्टो' ख. ग. पाठः । ५. 'य', ६. 'स्त' ग. पाठः । ७. 'रा दे' ख. पाठः ।

न प्राकारेण कुड्येन न विटङ्केन वा पुनः ।
अन्तर्हितानि दुष्यन्ति द्वारमर्माणि कुत्रचित् ॥ ५१ ॥

अत्युच्चे स्याद् भयं राज्ञो निम्ने तस्करतो भयम् ।
कुलपीडा भवेत् कुब्जे बहिर्याते पराभवः ॥ ५२ ॥

आध्मातेऽत्यन्तदारिद्र्यं कृशमध्ये क्षयो नृणाम् ।
रथ्याविद्धे भवेद् रोगो मरणं चत्वरेण च ॥ ५३ ॥

शृङ्गाटकेन वैधव्यं दुहितॄणां प्रजायते ।
वाप्या कूपेन वा विद्धे स्यादतीसारतो भयम् ॥ ५४ ॥

कोणान्मृत्युभयं दद्याद् वृक्षै रोगभयं भवेत् ।
स्तम्भेन म्रियते स्वामी भ्रमेणार्थो न तिष्ठति ॥ ५५ ॥

प्रणालेन महद् दुःखं महाभीतिर्महाकलिः ।
तस्मात् सर्वप्रयत्नेन द्वारवेधं विवर्जयेत् ॥ ५६ ॥

यस्याग्रतः पृष्ठतश्च द्वारे भित्त्योर्द्वयोरपि ।
अन्योन्यं भिद्यते यस्मिंन्नैकगत्याश्रिते[1] उभे ॥ ५७ ॥

वास्तु तद् भिन्नदेहाख्यं भिन्नस्वामिविधायकम् ।
न तत्र जायते वृद्धिः स्थापितस्य न कस्यचित् ॥ ५८ ॥

गृहकुक्षौ कृतं द्वारं सर्वरोगभयङ्करम् ।
पूर्वद्वारं तु माहेन्द्रं प्रशस्तं सर्वकामदम् ॥ ५९ ॥

गृहक्षतं तु विहितं दक्षिणेन शुभावहम् ।
गन्धर्वमथवा तत्र कर्तव्यं श्रेयसे (तः?स)दा ॥ ६० ॥

पश्चिमेन प्रशस्तं स्यात् पुष्पदन्तं जयावहम् ।
भल्लाटमुत्तरे द्वारं प्रशस्तं स्याद् गृहेशितुः ॥ ६१ ॥

एकाशीतिपदे तस्मिंश्चतुरश्रपदेऽपि वा ।
द्वारोऽप्य(प)दगास्तासां ब्रूमो वह्न्यादितः फलम् ॥ ६२ ॥

हुताशभीतिः स्त्रीजन्म भूत्यर्थः प्रियता[2] नृपे ।
क्रोधे चा[3]नृतता(?) पुंसः क्रौर्यं स्यात् पूर्ववत् क्रमात् ॥ ६३ ॥

---

१. 'स्मिन्नेक', २. 'वा' ख. ग. पाठः । ३. 'वा' ख. पाठः ।

सुता(पि?सि)प्रैष्यनीचत्वे भक्षयानसुतर्द्धिकृत् ।
रौद्रं कृतघ्नमवसं याम्यतः सुतवीर्यहृत्(?) ॥ ६४ ॥

सुतोपपीडा रिपुवृद्धि[2]र्थसुतानवाप्ति[3]स्तनयार्थसम्पत् ।
स्वाप्तिर्नृशंसाद् भयमर्थनाश उक्तः क्रमादित्यपरोन्मुखेषु ॥ ६५ ॥

बन्धव्यसत्वे(?) रिपुवृद्धिरर्थसुताप्तिरग्र्या गुणसम्पदश्च ।
सुतार्थलब्धिर्द्विषयात्मजेन दोषास्त्रिया नैर्ऋतदिङ्मुखेषु ॥ ६६ ॥

गुणाश्च दोषाश्च यथावदेते निरूपिता द्वारसमाश्रिता ये ।
तान् शिल्पविच्छास्त्रविदां वरिष्ठो विज्ञाय पूज्यत्वमुपैति लोके ॥ ६७ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
द्वारगुणदोषो नाम एकोनचत्वारिंशोऽध्यायः ॥

## अथ पीठमानं नाम चत्वारिंशोऽध्यायः ।

देवानां मनुजानां च पीठमानमथोच्यते ।
पीठं कनीयो भागं च सार्धभागं तु मध्यमम् ॥ १ ॥

द्विभागमुत्तमं तत् स्यादेषा पीठसमुच्छ्रितिः ।
महेश्वरस्य विष्णोश्च ब्रह्मणश्चोत्तमं भवेत् ॥ २ ॥

इतरेषां च देवानां कर्तव्यं तन्न धीमता ।
ईश्वरस्य यथाकामं पीठं कार्यं विचक्षणैः ॥ ३ ॥

यस्मिन् स्थाने विधातव्यो ब्रह्मा विष्णुस्तथैव च ।
ईश्वरः सर्वतः कार्यो न दोषस्तत्र विद्यते ॥ ४ ॥

इतरेषां तु देवानां पीठं भागं समुच्छ्रितम् ।
यस्य येन विभागेन वास्तुमानं विधीयते ॥ ५ ॥

तस्य तेनैव भागेन पीठोच्छ्रायो विधीयते ।
मनुजानां च पीठानि वेश्मनां देवपीठकैः ॥ ६ ॥

---

१. 'पा' ग. पाठः । २. 'रर्थं', ३. 'र्थि', ४. 'तश्चङ्', ५. 'ठके' ख. ग. पाठः ।

तुल्यानि कुर्यादुपरि कृता वृद्धिकराः सुराः ।
पुरमध्ये तु कर्तव्यं ब्रह्मणो गृहमुत्तमम् ॥ ७ ॥

चतुर्मुखं च तत् कार्यं यथा पश्यति तत् पुरम् ।
अधिकं सर्ववेश्मभ्यस्तथा राजगृहादपि ॥ ८ ॥

राजवेश्माधिकमपि शस्यतेऽन्यसुरालयात् ।
पञ्चमो लोकपालनां राजा श्रेष्ठतमो यतः ॥ ९ ॥

एवमेतानि देवानां पीठान्युक्तान्यशेषतः ।
चातुवर्ण्यस्य पीठानि ब्रूमो विप्राद्यनुक्रमात् ॥ १० ॥

षट्त्रिंशदङ्गुलोत्सेधं पीठं विप्रस्य शस्यते ।
इतरेषां तु वर्णानां ह्रस्वं स्याच्चतुरङ्गुलम् ॥ ११ ॥

चातुर्वर्ण्यस्य[1] पीठानि भुङ्क्ते विप्रो गृहाणि च ।
त्रयाणां[2] क्षत्त्रियो वैश्यो द्वयोः शूद्रः क्रमात् स्वकम् ॥ १२ ॥

एवं विभागं पीठानां स्थपतिः परिकल्पयेत् ।
हितं कारयितुर्वाञ्छन् नृपतेश्च समृद्धये ॥ १३ ॥

प्रमाणे स्थापिता देवाः पूजार्हाश्च भवन्ति हि ।
प्रमाणं पीठानामिदमभिहितं ब्रह्ममुरजि-
त्पुरारीणामत्रापरदिविषदां यच्च नियतम् ।
ततो विप्रादीनामपि निगदितं यत् तदखिलं
यथौचित्यायोज्यं[3][4] श्रियमभिलषद्भिः स्थपतिभिः ॥ १४$\frac{1}{2}$ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
पीठमानं नाम चत्वारिंशोऽध्यायः ॥

## अथ चयविधिर्नामैकचत्वारिंशोऽध्यायः ।

इदानीमभिधीयन्ते चयस्येह गुणागुणाः ।
सुविभक्तः समश्चारुश्चतुरश्रश्चयः[5] शुभः ॥ १ ॥

---

१. 'र्णांशु पी', २. 'णामन्यजातीनां गृहं शूद्रकमाशकम्', ३. 'यद्यौ', ४. 'त्याद्योज्यं' ख. ग. पाठः । ५. 'श्शुभश्चयः ।' क. पाठः ।

असंभ्रान्तमसन्दिग्धमाविनाश्यं[1]न्यबार्हितम् ।
अनुत्तं[2]ममनुद्वृत्तमकुब्जं नच पीडितम् ॥ २ ॥
समानखण्डमृज्वन्तमन्तरङ्गं तथैव च ।
सुपार्श्वं सन्धिसु[3]श्लिष्टं सुप्रतिष्ठं सुसन्धि च ॥ ३ ॥
अजिह्मं चेति चेयस्य गुणा विंशतिरित्यमी ।
एतेषां वैपरीत्येन दोषाणामपि विंशतिः ॥ ४ ॥
दक्षिणं तु यदा कुड्यं विचिनोति बहिर्मुखम् ।
तदा व्याधिभयं विद्यान्मृत्युदण्डं च निर्दिशेत् ॥ ५ ॥
पश्चिमं तु यदा कुड्यं विचिन्वान्ति बहिर्मुखम् ।
धनहानिं[4] तदा विद्याद् दस्युभ्यं[5]श्च भयं भवेत् ॥ ६ ॥
उत्तरं तु यदा कुड्यं विचिनोति बहिर्मुखम् ।
कर्तारं स्वामिनं वापि व्यसनं प्रापयेत् तदा ॥ ७ ॥
प्राच्यं बहिर्मुखं कुड्यं चिनोति स्थपतिर्यदा ।
राजदण्डभयं तत्र निर्देष्टव्यं विचक्षणैः ॥ ८ ॥
एतदेव फलं ब्रूयात् पतिते दलिते तथा[6] ।
यस्य प्राग्दक्षिणः कर्णः प्रवर्तेत बहिर्मुखः ॥ ९ ॥
स्यात् तत्राग्निभयं घोरं गृहभर्तुश्च संशयः ।
गच्छेद् बहिर्मुखः कर्णो यदा दक्षिणपश्चिमः ॥ १० ॥
कलहोपद्रवस्तत्र स्याद् भार्यायाश्च संशयः ।
पश्चिमोत्तरकर्णे तु सम्प्रयाते बहिर्मुखे ॥ ११ ॥
पशुर्वाहनपुत्राणां संशयस्तत्र जायते ।
प्रागुत्तरो यदा कर्णः प्रचीयेत बहिर्मुखः ॥ १२ ॥
गुरूणां संशयस्तत्र गोवृषादेश्च जायते ।
विशालं यदि जायेत सर्वबाहुषु चिन्वतः ॥ १३ ॥
कर्णिकासमसंस्थानं त[7]द् भवेन्मल्लिकाकृति ।
न तादृशो भवेदायस्तत्र यादृग् व्ययो भवेत् ॥ १४ ॥

---

१. 'श्यं च ग ख, 'शं च ग' ग. पाठः । २. 'मत्तम' ख. ग. पाठः । ३. 'षु', ४. 'नि', ५. 'भि', ६. 'दा', ७. 'य' क. पाठः ।

चयस्य तस्य दोषेण गृ(हृ?ही)क्षीणं[1]ः पलायते ।
चिन्वतो यदि संक्षिप्तमत्यर्थं तत्र जायते ।। १५ ।।

ब्रह्मसंज्ञं तदुद्दिष्टं तत्र राजभयं भवेत् ।
विस्तृतं यदि बाह्येषु[2] संक्षिप्तं चैव मध्यतः ।। १६ ।।

तनुमध्यं तदुद्दिष्टं तत्र विद्यात् क्षुधो भयम् ।
उच्छ्रितं यदि कर्णेषु परिहीणं च मध्यतः ।। १७ ।।

निर्णतं[3] नाम तद् विद्यात् तत्र चौरभयं भवेत् ।
कर्णेषु परिहीणं चेदुच्छ्रितं चापि मध्यतः ।। १८ ।।

कूर्मोन्नतमिति ज्ञेयं सर्वदोषभयावहम् ।
विषमोन्नतकर्णेषु निर्दिशेद् द्रविणक्षयम् ।। १९ ।।

प्राज्यान्नपानं तद् विद्यात् समेषु विहितेषु च ।
इत्येते चीयमानस्य गुणदोषाः प्रकीर्तिताः ।। २० ।।

तस्मात् सर्वप्रयत्नेन चयकर्म प्रयोजयेत् ।
उदकेन समं नीत्वा सम्यङ्निश्चयकारणम् ।। २१ ।।

त(त्रा?स्मा)हते न चान्यत् स्यान्निश्चयार्थं चयस्य च ।
तस्माज्जलेन वलयं गृह्णीयात् पूर्वमाहतः ।। २२ ।।

ततः सुताडिते सूत्रे चयं कुर्याद् विचक्षणः ।
द्विगुणां क्षेत्रमानस्य रज्जुं कृत्वा तदन्तयोः ।। २३ ।।

योऽसौ[4](?) कार्यौ ततस्तस्यां पादोनक्षेत्रमानतः ।
दद्यान्निरिञ्छनं[5] कीलौ क्षेत्रगर्भान्तगामिनौ ।। २४ ।।

निधाया(याः[6]?य)सकौ तस्याः प्रान्तस्थौ योजयेत् तयोः ।
निरञ्छनाभिकृष्टायां[7] पादोनक्षेत्रसंमितम्[8] ।। २५ ।।

भुजगत्या[9] भवेद् रज्जुस्तस्यामिष्टानु[10]मानतः ।
चिह्नं दद्यात् स कर्णः स्यादेवं दोषान् प्रसाधयेत् ।। २६ ।।

---

१. 'णे', २. 'वा तेषु', ३. 'र्न' क. ख. ग. पाठः । ४. 'यौ' ख. ग. पाठः । ५. 'र', ६. 'यामकौ', ७. 'ष्णा' क. पाठः । ८. 'तः', ९. 'ङ्ग', १०. 'न' ख. ग. पाठः ।

भूरि नो[1]च्छादनं दद्यान्न भिन्द्यात् तत्र चेष्टकाः ।
विषमस्थाः कुठारेणच्छित्त्वा ताः कल्पयेत् समाः ॥ २७ ॥

यथा नच स्पृशेत् सूत्रं विचिन्वीत तथा बुधः ।
कुड्ये च सादिमध्यान्ते [2]दृष्टिमेकां निपा[3]तयेत् ॥ २८ ॥

यदा सर्वपरिक्रान्तं तलं चोद्घाटितं भवेत् ।
तदा नैकत्र कुर्वीत पर्यायेण विचक्षणः ॥ २९ ॥

उद्घाटनं स्तै[4]राणां(?) तु यदीच्छेत् सिद्धिमात्मनः ।
तत्र तत्र चयं कुर्याद् यदि संविद्धकं हितम् ॥ ३० ॥

[5]दुर्वहं हि भवेत् तेन तस्मात् तत् परिवर्जयेत् ।
उपरिष्टात् समं पार्श्वे [6]भुजं कुर्याद् विचक्षणः ॥ ३१ ॥

समन्ताद्[7] रुचकच्छिन्नश्चयो भित्तिषु पूजितः ।
तस्मात् प्रयत्नः कर्तव्यश्चयकर्मणि नित्यशः ॥ ३२ ॥

इति भाषितरूपितमाचरतश्चयकर्म यथाविधि शिल्पकृतम् ।
भवतीह यशो भुवने विततं गृहभर्तुरपि प्रचुरो विभवः ॥ ३३ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
चयविधिर्नामैकचत्वारिंशोऽध्यायः ॥

# अथ शान्तिकर्मविधिर्नाम द्विचत्वारिंशोऽध्यायः ।

इदानीमभिधास्यामो विधानं शान्तिकर्मणः ।
यथांवदिष्ट्वा दिक्पालान् हुत्वा शान्तीर्यथाक्रमम् ॥ १ ॥

स्नपयेत् कर्णि[8]कां कुम्भैः सहिरण्यैर्विचक्षणः ।
सर्वगन्धानुलिप्तां च माल्यदामविभूषिताम् ॥ २ ॥

कृतमाल्यानिवासि[9]तां(?) मूले च मधुलेपिताम् ।
दोषप्रशमनार्थाय तां मूलेषु निखातयेत् ॥ ३ ॥

१. 'मा' ख. पाठः । २. 'द्विष्टमे', ३. 'योजये', ख. ग. पाठः । ४. 'न' ख, 'त' ग. पाठः । ५. 'दुर्बलं हि', ६. 'भयं कु' ख. ग. पाठः । ७. 'दु+क' क, 'ह्रुचक' ग. पाठः । ८. 'का' ख. ग. पाठः । ९. 'स' क. पाठः ।

मधुकुम्भमरिष्टं च शेवालं च विधानवित् ।
वाचयित्वा तु[1] विप्रेन्द्रान् कृतपुण्याहमङ्गलान् ॥ ४ ॥

स्थापयेत् कर्णिकाः सर्वाः स्थपतिः प्रयतः शुचिः ।
एतेन विधिना कर्म चातुर्वर्ण्यस्य कारयेत् ॥ ५ ॥

कर्णिका रोपिता यत्र पुनरुत्पाट्य रोप्यते ।
न तन्निष्पद्यते वेश्म स्वामी चात्र विनश्यति ॥ ६ ॥

निखातं तु यदा दारुच्छिद्यते ताड्यते पुनः ।
तन्नाशो धनधान्यस्य स्वामिनश्चात्र सर्वथा ॥ ७ ॥

वल्लीनिपीडितं दारु प्रवेशे चेन्निखन्यते ।
आशीविषभयं घोरं तस्मिन्नुत्पातलक्षणम् ॥ ८ ॥

उत्थाने कर्णिका रक्ष्या सर्वसत्त्वाभिधर्षणात् ।
नवे कर्मण्यशकुना मृगव्यालसरीसृपाः ॥ ९ ॥

काणकामधिरोहन्ति दाषास्तत्र वदद्मून् ।
कृतापीडां परिहृतां यद्यारोहन्ति वायसाः ॥ १० ॥

गृहिणस्तत् प्रवासः स्यादन्नं पानं च हीयते ।
मयूरे तद्गृहं राजा हरेत् पञ्चाब्दतः परम् ॥ ११ ॥
वराङ्गे जायते व्याधिः कोकिलै[2]र्द्व्यब्दतः परम् ।
काकोलैस्त्रीणि वर्षाणि जायते सुमहद् भयम् ॥ १२ ॥
शुके स्युः कलहा[3]द्यानि नच निष्पद्यते गृहम् ।
कुक्कुटेऽग्निभयं विद्याद् राजतो वा महद् भयम् ॥ १३ ॥
सारिकायां तु दौःशील्यं स्त्रीणां गृहपतेस्तथा ।
स[4]र्परूपे(तं[5]?तु)विघ्नेन गृहं निष्ठां न गच्छति ॥ १४ ॥

स्त्रीपुंसयोः कुलिङ्गे तु जायते पापकारिता ।
पारावते तु जायेते स्त्रीपुंसौ गुरुतल्पगौ ॥ १५ ॥
विडाले तु कुलं दासैः सह रोगैर्निपीड्यते ।
ज्वलनो वा जलं वापि हस्ती वा हन्ति तद्गृहम् ॥ १६ ॥

१. 'च', २. 'द्वौ' ख. ग. पाठः । ३. 'ज्यानि' ख. पाठः । ४. 'सर्पे',
५. 'न' क. पाठः ।

आरण्यैः शकुनैरेतत् स्यद् वर्षाद् धर्षणे फलम् ।
यूनां[1] च जायते मृत्युर्मध्वासङ्गे धनक्षयः ॥ १७ ॥

दुःस्वप्नदर्शनं घूके बालानां मरणं तथा ।
त्रस्तभीते निलीने तु राजा शून्यं हरेद् गृहम् ॥ १८ ॥

यदा त्वग्रे प्रदृश्येत धूम्रः कर्णगतोऽपि वा ।
अग्निर्दहति तत् क्षिप्रं विद्युद् वा हन्ति मन्दिरम् ॥ १९ ।

यत्रारोहति गृध्रस्तद् द्विजाङ्घ्रि[2]स्पृष्टमाचरेत् ।
कृत्वा हलशतैः कृष्टं ततो बीजानि वापयेत् ॥ २० ॥

गावश्चात्र प्रदुह्येरञ् शान्तिकानि च कारयेत् ।
मेघेऽभिवृष्टे भूयोऽपि तत्र कुर्वीत मन्दिरम् ॥ २१

येषु येषु गृहाङ्गेषु मधुनः सञ्चया भवेत् ।
तस्याङ्गस्य वधं ब्रूयात् प्रेषिण्यां चाप्युपद्रवम् ॥ २२ ॥

तस्माद्धेतोः शिखाग्रेषु मुकुटान् प्रणिधापयेत् ।
यावन्न रोपयेत् सौम्यं तावद् रक्षेत् समन्ततः ॥ २३ ॥

अभिलीनं तु शकुनैर्नहि किञ्चित् प्रशस्यते ।
तस्मात् प्रयत्नतो रक्षे[3]दुत्पातात् प्रागुदी[4]रितात् ॥ २४ ॥

भङ्गे गृहाणां दारूणां शान्तिहोमोऽथ कथ्यते ।
इन्द्रकीलो महाकूटः पृष्ठवंशोत्तरौ धरौ ॥ २५ ॥

प्रग्रहो(?)ऽलिन्दपादौ वा स्वामिनं घ्नन्त्युपद्रवाः ।
तुलास्थपत्यः(?) कूटं वा वेदिका कर्णपालिका ॥ २६ ॥

नेत्रं कपोतपालिश्च हनप्रविष्टं कुट्टुम्बिनी(?) ।
अन्वग्राः पं(क्षि?क्ष)वंशाश्च मल्लकाः सकुमारकाः ॥ २७ ॥

गोपानस्यो मृगाल्यश्च स्थपिताः स्वकुमारिकाः(?) ।
परिघा द्वारपक्षाश्च भ्रातरं घ्नन्त्युपद्रवाः ॥ २८ ॥

---

१. 'नृणां च ग. पाठः । २. 'ह्रि' क. पाठः । ३. 'क्षेत् प्रातान्', ४. 'दाहृतात् ।' ख. ग. पाठः । ५. 'व', ६. 'काः', ७. 'रि' ख. ग. पाठः । ८. 'ट' क. पाठः । ९. 'यज्ववं' ख. ग. पाठः ।

संयुक्तं सङ्ग्रहो हन्ति निकृष्टांश्चाधरो धरः ।
स्थौण्यानि प्रतिमोको वा हन्युरिष्टान् परिच्छदान् ॥ २९ ॥

उ(द्?प)धिर्भगिनीं[1] हन्यादथवा परिचारकान् ।
पुंसां पुन्नामभिर्द्रव्यैः स्त्रीणां स्त्रीनभिर्भवेत् ॥ ३० ॥

उपघातो हतैर्नित्यं द्रव्याणां तु नपुंसकैः ।
भूलिका[2] स्त्रीविनाशाय गृहनाशाय वेधनम् ॥ ३१ ॥

कीला वा सन्धिपालिर्वा मित्रनाशाय दुष्यति ।
नवे गृहे नवं दारु क्रियमाणमथो कृतम् ॥ ३२ ॥

आयोज्यमानं युक्तं वा[3] न्यूनसंवत्सरं स्थितम् ।
भज्यते देहनाशाय स्फुटत्यथ[4] विभज्यते ॥ ३३ ॥

गृहं ब्राह्मणसात् कृत्वा रत्नैरालिख्य चापरम् ।
नवैर्वस्त्रैः परिच्छाद्य[5] पुनर्भिद्यानि(?)कारयेत् ॥ ३४ ॥

दग्धे भिन्ने[6] प्रचलिते विनते विद्युता हते ।
विरूढे दलिते सन्ने सर्वत्रौषधिभिः स्मृताः ॥ ३५ ॥

शान्तयो विविधं हुत्वा ब्राह्मणान् स्वस्ति वाच्य वा ।
स्थूणिका भज्यते यस्य कीर्त्तिस्तस्योपहन्यते ॥ ३६ ॥

चन्द्रसूर्यौ यजेत् तत्र ततः शाम्यति पातकम् ।
तद्विधं वृक्षमानीय पुनस्तां प्रति कारयेत् ॥ ३७ ॥

एवं कृते सुखी स स्यात् कीर्त्तिश्चायुर्ध्रुवा भवेत् ।
मल्लको भज्यते[7] यस्य[8] पौरुषं तस्य हन्यते ॥ ३८ ॥

इष्टानभसनक्षत्रं(?) प्रायश्चित्तं समाचरेत् ।
तद्विधं वृक्षमानीय प्रति कुर्वीत मल्लकम् ॥ ३९ ॥

एवं कृत्वा सुखी स स्याद् बलं[9] चास्याभिवर्धते ।
पृष्ठवंशस्य भङ्गेन गृही बन्धमवाप्नुयात् ॥ ४० ॥

१. 'धिर्भगिना' क, 'भग्नि ह' ख. ग. पाठः । २. 'चू', ३. 'स्यान्न्यू' ख पाठः । ४. 'न्त्य', ५. 'द्य भेद्यतितु कार', ६. 'कन्नै' ख. ग. पाठः । ७. 'भु' क. पाठः । ८. 'स्य तस्य पुरुषोऽपहन्य', ९. 'घनं चा' ख. ग. पाठः ।

राजराजं यजेत् तत्र प्रायश्चित्तं तथाचरेत् ।
सुखी भवति तत् कृत्वा सर्वतश्चाभिवर्धते ॥ ४१ ॥

सर्वेषु स्वस्ति वाच्याश्च ब्राह्मणा दक्षिणाक्षतैः ।
[1]वारणो भज्यते यस्तु ज्येष्ठं पुत्रं स (वा[2]ज्य?बाध)ते ॥ ४२ ॥

पृथ्वीधरं यजेत् तत्र प्रायश्चित्तं [3]तथाचरेत् ।
तद्विधं वृक्षमानीय पुनस्तं प्रति कारयेत् ॥ ४३ ॥

सुखी भवति कृत्वैवं पुत्रैश्चापि विवर्धते ।
संग्रहो भज्यते यस्तु कुलज्येष्ठं स (वार्ध?बाध)ते ॥ ४४ ॥

पितॄन् देवान् यजेत् तत्र प्रायश्चित्तं तथाचरेत् ।
सुखी भवति कृत्वैवं प्रीयन्ते पितरस्तथा ॥ ४५ ॥

स्थूण्यं तु भज्यते यस्य तनयस्तस्य बाध्यते ।
देवानेव यजेत् तत्र प्रायश्चित्तं तथाचरेत् ॥ ४६ ॥

तद्विधं वृक्षमानीय तत् स्थौण्यं प्रति कारयेत् ।
सुखी भवति कृत्वैवं पुत्रैश्चापि विवर्धने ॥ ४७ ॥

उपधी व्यथते यत्र तत्रामात्यो विनश्यति ।
यजेत वासवं तत्र प्रायश्चित्तं तथाचरेत् ॥ ४८ ॥

आनीय तद्विधं वृक्षमुपधिं प्रति कारयेत् ।
एवं कृते भवेत् सौख्यममात्यैश्च वि[4]वर्धते ॥ ४९ ॥

कायस्तु व्यथते यस्य[5] प्रेष्यस्तस्योपहन्यते ।
यक्षं तत्र यजेद् देवं प्रायश्चित्तं तथाचरेत् ॥ ५० ॥

तद्विधं काष्ठमानीय कायं तं प्रति कारयेत् ।
एवं कृते सुखी स स्यात् प्रेष्यैरपि विवर्धते ॥ ५१ ॥

तुला तु व्यथते यस्य व्यथतेऽस्य कुटुम्बिनी ।
यजेत मेदिनीं तत्र प्रायश्चित्तं तथाचरेत् ॥ ५२ ॥

---

१. 'ता' ख. ग. पाठः । २. 'चाल्यते' ख., 'पाल्यते' ग. पाठः । ३. 'समाच', ४. 'वर्धयेत्' क. पाठः । ५. 'स्याः प्रेषस्त' ख. ग. पाठः ।

तद्विधं वृक्षमानीय स्थापयेत् तां स्वलङ्कृताम्।
ततस्त्वन्याः क्रियाः पश्यन् कारयेन्मतिमान् नरः ॥ ५३ ॥

वधूमिव नवैर्वस्त्रैः प्रतिच्छाद्य स्वलङ्कृताम्।
ब्राह्मणान् वाचयेत् स्वस्ति ततस्तां प्रति कारयेत् ॥ ५४ ॥

सुखी भवति कृत्वैवं धनैर्नित्यं विवर्धते।
कर्णिकास्वान्तरस्थूणामालपादोऽथ भज्यते ॥ ५५ ॥

तद्गृही दुःखमाप्नोति तस्मिन्नुत्पातलक्षणे।
आनीय स्थपतिं तत्र प्रज्ञावन्तं बहुश्रुतम् ॥ ५६ ॥

तत्र वास्तुविभागेन यो देवः स्याद् विनिश्चितः।
तस्मै देवाय जुहुयात् प्रायश्चित्तं च कारयेत् ॥ ५७ ॥

सुखी भवति कृत्वैवं सर्वतश्चाभिवर्धते।
युगं तु व्यथते यत्र तत्र स्यात् पशुपीडनम् ॥ ५८ ॥

यजेत तस्मिन्नीशानं प्रायश्चित्तं च कारयेत्।
तद्विधं वृक्षमानीय युगं तत् प्रति कारयेत् ॥ ५९ ॥

एवं कृते सुखं तस्य पशुवृद्धिश्च जायते।
तुलया अगयोर्वापि(?) पादो यस्य प्रभज्यते ॥ ६० ॥

आयुर्हानिर्भवेत् तत्र बलदेवं प्रपूजयेत्।
प्रायश्चित्तं ततः कृत्वा पुनस्तं प्रति कारयेत् ॥ ६१ ॥

सुखी भवति कृत्वैवं कुटुम्बी शान्तिकं च तत्।
द्वाराङ्गं यस्य माहेन्द्रं हिंस्यते नवकर्मणि ॥ ६२ ॥

इन्द्रं तत्र यजेद् देवं प्रायश्चित्तं तथाचरेत्।
गृहक्षतस्य द्वाराङ्गे पूजयेद् यममेव त(तम्) ॥ ६३

पुष्पदन्तस्य द्वाराङ्गे वरुणं तत्र पूजयेत्।
द्वाराङ्गं यस्य भल्लाटं हिंस्यते नवकर्मणि ॥ ६४ ॥

१. 'स्त्विमाः क्रि', ख. ग. पाठः। २. 'त्प्रातिमां न', क. पाठः। ३. 'धान्यैश्च थ' ख. ग. पाठः। ४. 'तथाचरेत' क. ग. पाठः। ५. 'आ' ख. पाठः। ६. यहानिः, ७. 'कर्म तत्' ख. ग. पाठः। ८. 'न्द्रे' क, पाठः ९. 'त्वा' ख. ग. पाठः।

सोमं तत्र यजेद् देवं प्रायश्चित्तं समाचरेत् ।
सुखी भवति कृत्वैवं कुटुम्बी शान्तिकं[1] च तत् ॥ ६५ ॥

स्थूणाराजस्य यस्याग्रं वक्रं दक्षिणतो भवेत् ।
शरीरं व्यथते तत्र प्रतिसंवत्सरं स्थिरम्[2] ॥ ६६ ॥

पृष्ठतो दीर्घशोकः स्यादुत्तरेण धनक्षयः ।
पूर्वतो राजदण्डः स्यात् तस्मात् तद् ऋजु शस्यते ॥ ६७ ॥

चत्वार्यङ्गानि हिंस्यन्ते शरीरा ये च वेश्मनः ।
तुला वा पृष्ठवंशो वा धार(ण्यां?णी)चोत्त[3]राम्बरः ॥ ६८ ॥

उक्तांस्तत्र बलीन् कुर्यात् प्रायश्चित्तं तथाचरेत् ।
एवं धन्यं शिवं पुष्टिप्रजावृद्धिकरं भवेत् ॥ ६९ ॥

इत्थं निमित्तानि गृहाश्रितानि
ज्ञात्वा प्रदृष्टा[4]न् शकुनांश्च सर्वान् ।
शान्तिं प्रकुर्वन् पृथगुक्तरूपां
प्राप्नोति कीर्त्तिं सुखमर्थमायुः ॥ ७० ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
शान्तिकर्मविधिर्नाम द्विचत्वारिंशोऽध्यायः ॥

## अथ द्वारभङ्गफलं नाम त्रिचत्वारिंशोऽध्यायः ।

यदत्र नवकर्मोक्तं तद् यज्ञेषु गृहेषु च ।
ज्ञेयं ग्रामे पुरे वापि नगरे पत्तने तथा ॥ १ ॥

संस्थानमाकृतिर्मानं ह्रासवृद्धी च बाहुषु ।
एकमेव विजानीयात् सर्वत्रैव विचक्षणः ॥ २ ॥

यूपस्यैव निमित्तानि दारुकर्मणि निर्दिशेत् ।
पातं पते विजानीयात् तक्षणं तक्षणेन च ॥ ३ ॥

---

१. 'कर्म त' ख, 'कर्मवित्' ग. पाठः । २. 'ते।' क. पाठः । ३. 'थोत्त' ख. ग. पाठः । ४. 'हृ' क. पाठः । ५. 'सं' ख. ग. पाठः ।

यूपाच्छ्रायामिव ब्रूयाद् दारूणामपि चोच्छ्रयम् ।
भङ्गेन भङ्गो नि(र्दि?र्द्दे)श्यः समाधिश्च समाधिना ॥ ४ ॥

नवकर्मणि यत् स्निग्धं सुगन्धि प्रियदर्शनम् ।
गम्येश्वरं(?) मनुष्याणां धन्यं तदभिनिर्दिशेत् ॥ ५ ॥

पुरं वा यदि वा ग्रामो गृहं वा यदि निष्प्रभम् ।
आयासबहुलं तद्धि तादृशैर्लक्षणैर्भवेत् ॥ ६ ॥

परिध्वस्तोपमं रूक्षं नवकर्मणि यद् भवेत् ।
भ्रमं रोगं च शोकं च तस्मिन् वेश्मनि निर्दिशेत् ॥ ७ ॥

जनेन च यदाकीर्णं निष्छायमिव ल(क्ष?क्ष्य)ते ।
कुटुम्बी तत्र षण्मासान् नात्र जीवेन्न संशयः ॥ ८ ॥

यच्छून्यमप्यशून्याभं वेश्म वा यदि वा पुरम् ।
सर्वकामगुणैर्युक्तं ध(नं?न्यं) तदभिनिर्दिशेत् ॥ ९ ॥

पूर्वो नगरभागश्चेद् रम्यः स्यात् प्रियदर्शनः ।
प्रियभार्या मनःस्वास्थ्यं धनं धान्यं च भूपतेः ॥ १० ॥

पूर्वदक्षिणभागश्चेत् पुरस्य प्रियदर्शनः ।
महद् यशस्तदाप्नोति राजा हेम च पुष्कलम् ॥ ११ ॥

पुरस्य दक्षिणो भागो यदा रम्यस्तदा भवेत् ।
राज्ञः सेनापतिप्राप्तिर्धनं धान्यं च पुष्कलम् ॥ १२ ॥

रमणीयो यदा भागः पुरदक्षिणपश्चिमः ।
अर्थसंपत् तदा राज्ञः प्रजावृद्धिश्च जायते ॥ १३ ॥

पुरपश्चिमभागेन रमणीयेन पार्थिवः ।
पुत्रबान्धवधान्याढ्यः संप्राप्नोत्युन्नतिं पराम् ॥ १४ ॥

पश्चिमोत्तरभागे तु रमणीये नराधिपः ।
प्रेष्यैः पुत्रैर्वाहनैश्च वृद्धिमेत्युत्तरोत्तराम् ॥ १५ ॥

उत्तरे रमणीये तु पुरभागे नरेश्वरः ।
शत्रून् विजयते सर्वान् वर्धते च पुरोहितः ॥ १६ ॥

---

१. 'य', २. 'वान् धनवानाढ्यः' ख. ग. पाठः । ३. 'ति नरोत्तमः । क, 'त्युत्तरोत्तरः' ख. पाठः ।

यदि पूर्वोत्तरो भागः पुरस्य प्रियदर्शनः ।
तत्राभ्युत्तरमानन्दं क्षिप्रं राज्ञो विनिर्दिशेत् ॥ १७ ॥

निष्पन्नस्य पुरादेर्यो भागो न स्यान्मनोरमः ।
तस्य तस्यैव भागस्य परिहाणिं विनिर्दिशेत् ॥ १८ ॥

नवे यदि पुरद्वारे कपाटं प्रविशीर्यते ।
स्त्रीनामधेयमन्यद् वा स्त्रीनाशं तद् विनिर्दिशेत् ॥ १९ ॥

देवागारे पुरद्वारे प्राकाराट्टालकेषु च ।
हस्तिशालाश्वशालासु रथशाला(स्त?स्व)थापि वा ॥ २० ॥

कोष्ठागारायुधागारे निमित्तं तु शुभाशुभम् ।
यदि किञ्चित् प्रदृश्येत राज्ञस्तदभिनिर्दिशेत् ॥ २१ ॥

भङ्गो यत्रोर्ध्ववंशस्य तत्र राजा विनश्यति ।
अर्गलापीलिकाकुञ्चीभङ्गे च नवकर्मणि ॥ २२ ॥

ग्रामे नश्यन्ति चैतानि तदा ग्रामो विनश्यति ।
दिगुत्थितं तु राष्ट्राणां गृहार्थेषु कुटुम्बिनाम् ॥ २३ ॥

नवकर्मणि यत्किञ्चिद् भज्यते यदि वा नमेत् ।
वि(ध्व)स्ते वा स्फुटे वापि कुटुम्बिमरणं ध्रुवम् ॥ २४ ॥

फलं सर्वनिमित्तेषु शुभं वा यदि वाशुभम् ।
संवत्सरं परं ग्राह्यं नवकर्मकृते गृहे ॥ २५ ॥

परिसंवत्सरान्ते च पुराणमिति निर्दिशेत् ।
तुम्बिका भज्यते यत्र नवकर्मणि निष्ठिते ॥ २६ ॥

श्रेष्ठा तु महिला तत्र षड्भिर्मासैर्विनश्यति ।
एवमेव नवं यस्य सदनं तु विनश्यति ॥ २७ ॥

ग्रैष्यदासादिविश्वासात् तद् विनाशयति ध्रुवम् ।
पृष्ठवंशो नवो यस्य नवकर्माणि भिद्यते ॥ २८ ॥

१. 'त् ॥ देवागारे पुरद्वारे पुन्नाम यदि भज्यते । तत्र राजा विनश्येत स्त्रीनाम यदि तत् स्त्रियः ॥ देवा', ख. ग. पाठः । २. 'पि' क. ३. 'शुञ्चीभ' ख, 'शुञ्ची' ग. पाठः । ४. 'विथङ्गे वा' ख. ग. पाठः । ५. 'गुह्यका', ६. 'क्ष' क. पाठः । ७. 'सिविश्वास्यास्तद् विभासव' ख. ग. पाठः । ८. 'तं वि' क. पाठः । ९. 'भज्यते' ख. ग. पाठः ।

कुटुम्बी म्रियते तत्र गृहं संवत्सरात् परम् ।
प्रेष्याश्चात्र विनश्यन्ति दीर्यमाणे[1][2] विशेषतः ॥ २९ ॥

लुमासु भिद्यमानासु[3] कन्यामरणमादिशेत् ।
मुण्डकेषु विनष्टेषु सुहृद्दस्य विनश्यति ॥ ३० ॥
अनुपूर्वेषु भिन्नेषु पुत्राणां मरणं ध्रुवम् ।
विपत्तौ मुण्डगोधानां माता तस्य विनश्यति ॥ ३१ ॥
नागपाशकभङ्गे तु भृत्यानां मरणं भवेत् ।
कपाटे भ्रातृमरणमर्गलायां स्त्रिया वधः ॥ ३२ ॥
सुतस्य चार्गलापार्श्वे विनष्टे मरणं भवेत् ।
द्वारबन्धे विनष्टे तु शीघ्रं कुर्यात् कुलक्षयम् ॥ ३३ ॥
इन्द्रकीलो दृढो यस्य भङ्गमायाति मूलतः ।
सपुत्रपशुवर्गस्य तस्य ब्रूयात् कुलक्षतिम् ॥ ३४ ॥
तोरणं भज्यते यस्य द्रव्यं तस्य विनश्यति ।
गृहभर्तुश्च मरणं त्रिदशैरवधारयेत् ॥ ३५ ॥
वास्तुमध्ये विनष्टे तु कुलवृद्धो विनश्यति ।
सोपानं भिद्यते यत्र नवकर्मणि निष्ठिते ॥ ३६ ॥
तस्य प्रेष्याश्च गावश्च हिरण्यं च विनश्यति ।
वेदिका भज्यते यस्य भार्या तस्य विनश्यति ॥ ३७ ॥
गवाक्षस्तु विनश्येत पट्टस्तम्भो[10]ऽपि वा दृढः ।
गजशुण्डाथ[11] भिन्नो[12]ऽश्वः कपोताल्यथवा नवा ॥ ३८ ॥
स्थपनीपट्टिकाश्चैव[13] स्त्रीविनाशं तदादिशेत्[14] ।
विटङ्कस्य तुलाया वा भङ्गे जाते कथञ्चन ॥ ३९ ॥
शाला[15]स्तम्भस्य वा नाशे भार्या तस्य विनश्यति ।
स्तम्भशीर्षं[16] यदि भ्रश्येत्[17] स्फुटेत् स्तम्भोऽपि वा दृढः ॥ ४० ॥

---

१. 'वी' ख. ग. पाठः । २. 'प्यमानो वि' क. पाठः । ३. 'भज्यमा', ४. 'त्त' ख. ग. पाठः । ५. 'षु', ६. 'व्य' क. पाठः । ७. 'ब्रूयात्', ८. 'यम्', ९. 'भज्यते', १०. 'पुटस्त' ख. ग. पाठः । ११. स्त्वंद्राथ' ख, 'स्त्वंड्यथ' ग. पाठः । १२. 'न्नश्च', १३. 'चै' ख. ग. पाठः । १४. 'भवेत्' क. पाठः । १५. 'मा' ख. पाठः । १६. 'र्षे', १७. 'श्ये', ख. ग. पाठः ।

भज्यते प्रतिमोको वा स्वामिनस्तु वधो भवेत् ।
भङ्गे तु भङ्गवाहिन्याः कुलवृद्धवधो भवेत् ॥ ४१ ॥
आकाश[1]तलके पुत्राः प्रतिच्छिन्ने कुटुम्बिनः ।
विनष्टे च विनश्यन्ति षड्भिर्मासैर्न संशयः ॥ ४२ ॥
प्रासादमण्डले भग्ने भग्नासु वलभीषु च ।
भार्या कुटुम्बिनस्तस्य नाशमायात्यसंशयः ॥ ४३ ॥
प्रलीनो वा विलीनो वा प्रासादो यस्य भज्यते ।
प्रलीने भृत्यमृत्युः स्याद् विलीने तु धनक्षयः ॥ ४४ ॥
मिश्रे विनष्टे प्रासादे हीय[2]न्ते सर्व[3]वृद्धयः ।
मरणं वा भवेत् तत्र कुष्ठव्याधिं [4]च निर्दिशेत् ॥ ४५ ॥
येषु स्थानेषु भङ्गो वा विनतिर्वा प्रकीर्तितौ ।
उपद्रुतिर्विघातो वा [6]तेषां फलमपीरितम् ॥ ४६ ॥
स्निग्धानि यदि दृश्यन्ते तानि दार्ढ्यान्वितानि च ।
धनमायुश्च हर्षं च पूर्वोक्तानां तदादिशेत् ॥ ४७ ॥
कर्णिकाभ्यन्तरी स्थूणा शालापादोऽथ हीयते ।
यदि तद् दुःखमाप्नोति गृहभर्ता न संशयः ॥ ४८ ॥
संप्रधार्य च मेधावी बलाबलमतन्द्रितः ।
निर्दिशन् बलमाप्नोति धनमायुर्यशस्तथा ॥ ४९ ॥
एवमादिकनिमित्तसूचितं संप्रधार्य मतिमान् बलाबलम् ।
स्पष्टमादिशति योऽत्र शास्त्रवित् कीर्त्तिवित्त(+ध?भव)र्नानि सोऽश्नुते ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
द्वारभङ्गफलं नाम त्रिचत्वारिंशोऽध्यायः ॥

---

# अथ स्थपतिलक्षणं नाम चतुश्चत्वारिंशोऽध्यायः ।

---

स्थापत्यमुच्यतेऽस्माभिरिदानीं प्रक्रमागतम् ।
ज्ञातेन येन ज्ञायन्ते स्थपतीनां गुणागुणाः ॥ १ ॥

---

१. 'शे' क. पाठः । २. 'यते', ३. 'वृद्धिदः' ख. ग. पाठः । ४. 'वि' क. पाठः ।
५. 'तः' क. ख. ग. पाठः । ६. 'ये' ख. ग. पाठः । ७. 'श्यनब', ८. 'ननानि' क. पाठः ।

शास्त्रं कर्म तथा प्रज्ञा शीलं च क्रिययान्वितम् ।
लक्ष्यलक्षणयुक्तार्थ[1]शास्त्रनिष्ठो नरो भवेत् ॥ २ ॥

सामुद्रं गणितं चैव ज्योतिषं छन्द एव च ।
सिराज्ञानं तथा शि[2]ल्पं यन्त्रकर्मविधिस्तथा ॥ ३ ॥

एतान्यङ्गानि जानीयाद् वास्तुशास्त्रस्य बुद्धिमान् ।
शास्त्रानुसारेणाभ्युद्य लक्षणा[3]नि च लक्षयेत् ॥ ४ ॥

प्रसिद्धशास्त्रदृष्टान्तैर्वास्तुज्ञानं प्रसाधयेत् ।
वास्तुनः ससिरावंशैर्मर्मवेधैः सुनिश्चितैः ॥ ५ ॥

वास्तुद्वारक्ष[4]णान् भूयः सर्वान् जानाति शास्त्रतः ।
यस्तु शास्त्रमविज्ञाय प्रयोक्ता स्थपतिर्भवेत् ॥ ६ ॥

हन्तव्यः स स्वयं राज्ञा मृत्युवद् राजहिंसकः ।
मिथ्याज्ञानादहङ्कारी शास्त्रे चैवाकृतश्रमः ॥ ७ ॥

अकालमृत्युर्लोकस्य विचरेद् वसुधातले ।
यस्तु केवलशास्त्रज्ञः कर्मस्वपरिनिष्ठितः ॥ ८ ॥

स मुह्यति क्रियाकाले दृष्ट्वा भीरुरिवाहवम् ।
केवलं कर्म यो वेत्ति शास्त्रार्थं नाधिगच्छति ॥ ९ ॥

सोऽचक्षुरिव नीयेत विवशोऽ[5]न्येन वर्त्मसु ।
कर्म वास्तुविधेः स्थानं मानमुन्मानमेव च ॥ १० ॥

क्षेत्रजा(ति?नि) च कर्माणि लुमालेखा(च?श्च)तुर्दश ।
च(त्वा?तु)रो गण्डि[6]काच्छेदा[7]न् वृत्तच्छे[8]देषु सप्तसु ॥ ११ ॥

सुश्लिष्टं सन्धिसन्धानैरधरोत्तरसंयुतम् ।
बाह्यरेखान्वितं शुद्धं यो जानाति स कर्मवित् ॥ १२ ॥

शास्त्रकर्मसमर्थोऽपि स्थपतिः प्रज्ञया विना ।
फलेयुः कर्मभिरन्या[9]भिः(?) स्यान्निर्मद इव द्विपः ॥ १३ ॥

---

१. 'वित्तो न', २. 'शल्यं य', ३. 'णेन च', ४. 'वे' ख. ग. पाठः । ५. 'ल्पे' ख. पाठः । ६. 'डि' क. पाठः । ७. 'दा वृ' ख. ग. पाठः । ८. 'च्छा' क. ख. ग. पाठः । ९. 'ण्य' ख. ग. पाठः ।

प्रत्युत्पन्नमतिर्यः स्याद् वाह[1](तः?कः) स्थपतिस्तथा ।
कर्मकाले न मुह्येत् स प्रज्ञानेनोपबृंहितः ॥ १४ ॥

अप्रज्ञेयं दुरालोकं गूढार्थं वहुविस्तरम् ।
प्रज्ञापोतं समारुह्य प्राज्ञो वास्तु[2]निरं(?) तरेत् ॥ १५ ॥

ज्ञानवांश्च तथा वाग्मी कर्मस्वपि च निष्ठितः ।
एवं युक्तोऽपि न श्रेयान् यदि शीलविवर्जितः ॥ १६ ॥

रोषाद् द्वेषात् तथा लोभान्मोहाद् रागात् तथैव च ।
अन्यचिन्त्यत्वमायाति दुःशीलानामवि[3]क्षयात्(?) ॥ १७ ॥

शीलवान् पूजितो लोके शीलवान् साधुसम्मतः ।
शीलवान् सर्वकर्मार्हः शीलवान् प्रियदर्शनः ॥ १८ ॥

शील[4]ाधाने परं यत्नमा(धि?ति)[5]ष्ठेत् स्थपतिः सदा ।
ततः कर्माणि सिध्यन्ति जनयन्ति शुभानि च ॥ १९ ॥

तथाचाष्टविधं कर्म ज्ञेयं स्थपतिना सदा ।
आलेख्यं लेख्यजातं च दारुकर्म चयस्[6]तथा ॥ २० ॥

पाषाणसिद्धहेम्नां च शि[7]ल्पं कर्म तथैव च ।
एभिर्गुणैः समायुक्तः स्थपतिर्याति पूज्यताम् ॥ २१ ॥

स्थापत्यमङ्गैरिदमष्टभिर्यश्चतुर्विधं वेत्ति विशुद्धबुद्धिः ।
स शिल्पिनां संसदि लब्धपूजः परां प्रतिष्ठां लभते चिरायुः ॥ २२

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
स्थपतिलक्षणं नाम चतुश्चत्वारिंशोऽध्यायः ॥

१. 'ह्य' ख. पाठः । २. 'स्तुर्नेनाचरे' ख. ग. पाठः । ३. 'वी' क. पाठः ४. 'ल' ख. ग. पाठः । ५. 'ध्येच्चे स्थ' ग. पाठः । ६. 'त्त', क. पाठः ७. 'कल्पे धर्म' ख. ग. पाठः । ८. 'य' ग. पाठः ।

# अथ अष्टाङ्गलक्षणं नाम पञ्चचत्वारिंशोऽध्यायः।

प्रोक्तं चतुर्धा स्थापत्यं वास्तुतत्त्वस्य सिद्धये।
ब्रूमस्तदेव चेदानीमङ्गैः संयुक्तमष्टभिः ॥ १ ॥

तेष्वङ्गं प्रथमं प्रोक्तं वास्तुपुंसो विकल्पना।
पुरस्य विनिवेशस्तु द्वितीयं द्वारकर्म च ॥ २ ॥

रथ्याविभागः प्राकारनिवेशोऽट्टालकस्य च।
विनिवेशः प्रतोलीनां त्रिभागस्थानकानि च ॥ ३ ॥

प्रासादश्च तृतीयं स्याच्चतुर्थं तु ध्वजोच्छ्रितिः।
पञ्चमं नृपतेर्वेश्म स्थानान्तरविभक्ति च ॥ ४ ॥

चातुर्वर्ण्यविभागश्च गृहभागश्च षष्ठकम्।
सप्तमं यजमानस्य शालायां मानमीरितम् ॥ ५ ॥

यज्ञवेदीप्रमाणं च कोटिहोमविधिस्तथा।
अष्टमं राजशिबिरनिवेशो दुर्गकर्म च ॥ ६ ॥

यो वेत्त्यङ्गान्यमून्यष्टौ सोऽत्र स्थपतिसत्तमः।
यशो मानं स लभते पूज्यते च नराधिपैः ॥ ७ ॥

अशास्त्रज्ञमकर्मज्ञं स्थपतिं यः प्रयोजयेत्।
न तस्य वास्तु सिध्येत सिद्धमप्यसुखावहम् ॥ ८ ॥

तस्मात् कर्म च शास्त्रं च यो वेत्ति द्वितयं नरः।
अष्टाङ्गमपि यो वेत्ति स राज्ञः स्थपतिर्भवेत् ॥ ९ ॥

अङ्गानि पूर्वमुक्तानि वास्तुशास्त्रोक्तविस्तरात्।
तेषु प्रासादिकं यत् तद् वक्ष्यामोऽग्रे सविस्तरम् ॥ १० ॥

अथाङ्गं सप्तमं ब्रूमो यत् तद् यज्ञेषु युज्यते।
विनिविष्टे पुरे पूर्वं क्लृप्तेषु सुरधामसु ॥ ११ ॥

दिशि दक्षिणपूर्वस्यां यज्ञार्थं मापयेद् भुवम्।
निवेशं तत्र कुर्वीत चतुरश्रं समन्ततः ॥ १२ ॥

---

१. 'त्येतान्य' ख. ग. पाठः।

आयामेन विधातव्यो हस्ताष्टादशविस्तृतः ।
पूर्वद्वारं विधातव्यमादित्यस्य पदे बुधैः ॥ १३ ॥

तस्य पश्चिमभागे तु यजमानकुटी भवेत् ।
षोडशायामविस्तारा प्राङ्मुखी सा प्रशस्यते ॥ १४ ॥

यजमानकुटीद्वारे देवता या च कीर्तिता ।
ततः प्रभृति पूर्वेण प्राग्वंशं [1]परिकल्पयेत् ॥ १५ ॥

वेदिमध्ये स्थितं तत् स्यान्मानं वेद्याश्च [2]शस्यते ।
पूर्वापरेण षट्त्रिंशत् कर्तव्याः प्रक्रमा बुधैः ॥ १६ ॥

एकत्रिंशत् कुटीभागे मध्येऽष्टादश कल्पयेत् ।
प्रक्रमाः स्युः शिरस्थाने विंशतिश्चतु[3]रु[4]त्तरा ॥ १७ ॥

पुरुषस्य शिरस्तत्र प्राग्वंशे तु प्रतिष्ठितम् ।
तस्मात् पूर्वोत्तरं ज्ञेयं सर्वयज्ञेषु पूजितम् ॥ १८ ॥

वेद्यन्तरं तु कर्तव्यं शकटं येन गच्छति ।
तस्मादुत्तरवेदी या कार्या प्रत्युत्तरेण तु ॥ १९ ॥

द्विहस्तायामविस्तारो होमश्रेष्टः कृतोऽत्र हि ।
प्राग्दक्षिणेन संस्थानं यजमानस्य शस्यते ॥ २० ॥

कटिमात्रं सदा कार्यं नाभिमात्रमथापि वा ।
ततोऽधिकेन दुर्भिक्षमनावृष्टिश्च जायते ॥ २१ ॥

एषा यज्ञक्रिया प्रोक्ता कोटिहोमोऽथ वक्ष्यते ।
पुरस्याभ्यन्तरे भागे हुताशस्य पदे तथा ॥ २२ ॥

तस्मिन् स्थाने विधातव्यः कोटिहोमः सदा पुरे ।
लक्षहोमश्च कर्तव्यो नित्यो नैमित्तिकोऽपि वा ॥ २३ ॥

अथ भूमिवशात् स्थानं कदाचिन्नैव लभ्यते ।
सर्वतो ब्रह्मणः स्थानाद्धोमस्थानं निवेशयेत् ॥ २४ ॥

ऐशानीं दिशमाश्रित्य ब्राह्मणैर्वेदपारगैः ।
पुरश्चरणतत्त्वज्ञैः षट्कर्मनिरतैः सदा ॥ २५ ॥

---

१. 'प्रतिक' क. पाठः । २. 'कथ्यते', ३. 'रो' क. ख. ग. पाठः ।
४. 'ग्राः' क, ग. पाठः ।

नित्यं शान्तिपरैर्विप्रै राजा तु विजयी भवेत्।
नोपसर्गास्तु जायन्ते नच लक्ष्मीः पुरं त्यजेत् ॥ २६ ॥

अनावृष्टिभयं नास्ति सुभिक्षं जायते सदा।
उक्तं याज्ञिकमङ्गं तु सर्वाङ्गेभ्यः प्रशस्यते ॥ २७ ॥

सर्वं स्थपतिना ज्ञेयं तत्त्वज्ञैर्ब्राह्मणैः सह।
एकाशीतिपदेनैव यज्ञभूमिं तु मापयेत् ॥ २८ ॥

निवेशं शिबिरस्याथ कथयामोऽङ्गमष्टमम्।
यदा तु नृपतिः स्थानात् स्वाद् यात्राभिमुखो भवेत् ॥ २९ ॥

शिबिरस्य निवेशं च तत्त्ववेत्ता परीक्षयेत्।
अर्थशास्त्रविधिज्ञो वा स्थपतिर्वा प्रकल्पयेत् ॥ ३० ॥

शिबिरं चतुरश्रं स्याद् वृत्तं वृत्तायतं क्वचित्।
चतुरश्रायतं वापि विषमं वा क्वचिद् भवेत् ॥ ३१ ॥

भूमिभागवशात् क(ल्पं?ल्प्यं)महारथ्योभयान्वितम्।
शिबिरस्य तु चत्वारि कुर्याद् द्वाराणि यत्नतः ॥ ३२ ॥

रथ्या सार्धा तु सेनायाः पुररथ्याप्रमाणतः।
मित्रे स्थानं नरपतेः कार्यं पृथ्वीधरेऽपि वा ॥ ३३ ॥

आर्यम्णे वा विधातव्यं पदे वैवस्व(तो?ते)ऽथवा।
निवेशो मन्त्रिणां कार्यः पश्चि(मो?मे) राजवेश्मनः ॥ ३४ ॥

पुरोहितस्योत्तरतो बलाध्यक्षस्य पूर्वतः।
अन्तःपुरं दक्षिणतो भाण्डागारं तथैव च ॥ ३५ ॥

गृहं प्रविशतो[1] राज्ञो[2] न्यस्येद् दक्षिणतो हयान्।
वामे च दन्तिनो न्यस्येदेवं सैन्यं निवेशयेत् ॥ ३६ ॥

बाह्यतः परिखां तस्य कारयेद् राजवेश्मनः।
हस्तांस्त्रींश्चतुरो वापि पञ्चहस्तानथापि वा ॥ ३७ ॥

चतुष्षष्टिपदाख्येन विभाज्यं[3] शिबिरं बुधैः।
निवेशः शिबिरस्योक्तो दुर्गकर्माथ कथ्यते ॥ ३८ ॥

---

१. 'वे' क. ख. ग. पाठः। २. 'शि', ३. 'व्यं' क. पाठः।

दुर्गं तु षड्विधं प्रोक्तं राज्ञां तु विजिगीषताम् ।
अब्दुर्गं पङ्कदुर्गं वा वनदुर्गैरिणे तथा ॥ ३९ ॥

पार्वतीयं महादुर्गमिति कल्प्यानि पार्थिवैः ।
सर्वेषामेव दुर्गाणां पार्वतीयं प्रशस्यते ॥ ४० ॥

दुर्गस्थानविभागोऽत्र षोडशाख्येन कीर्तितः ।
मध्ये तु ब्रह्मणः स्थानमसम्बाधं विधीयते ॥ ४१ ॥

ब्रह्मस्थानं समारभ्य हर्म्यं पञ्चशयाः स्मृताः ।
उपरथ्या त्रिहस्ता तु शेषास्तु द्विशयाः स्मृताः ॥ ४२ ॥

सन्निकृष्टा विधातव्या दु(र्गाऽर्ग)रथ्या समन्ततः ।
द्वारं रथ्याप्रमाणेन कार्यं नात्यन्तमुच्छ्रितम् ॥ ४३ ॥

परचक्रसमं बाधं(?) सुरक्षं तत् सदा भवेत् ।
दुर्गेश्वरगृहस्थानं ब्रह्मणः परितो भवेत् ॥ ४४ ॥

वैवस्वतेऽथवार्यम्णे मैत्रे पृथ्वीधरेऽपि वा ।
यथा पुरे पुरा प्रोक्तं स्थानं दुर्गेऽपि तत् तथा ॥ ४५ ॥

वीराः शुभा हृदोषाश्च भूमिपालस्य संमताः ।
धनुर्वेदविधिज्ञाश्च कृतास्त्राः शास्त्रपारगाः ॥ ४६ ॥

दुर्गे स्थाप्याः सुरूपाश्च बहवश्च वरास्त्रियः ।
अन्तःपुरं च कोशं च कुमारांश्चात्र वासयेत् ॥ ४७ ॥

एवं दुर्गविधानस्य समासोऽयमुदाहृतः ।
इत्यष्टाङ्गो वास्तुशास्त्रस्य सारः संक्षेपेण स्पष्टमस्माभिरुक्तः ।
यत्र ज्ञाते शिल्पिवद् वास्तुविद्यापाथोनाथं सन्तरन्त्यप्रयासात् ॥ ४८½ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे

अष्टाङ्गलक्षणं नाम पञ्चचत्वारिंशोऽध्यायः ॥

१. 'णो' ग. पाठः । २. 'प', ३. 'गु', ४. 'थ' ख. ग. पाठः । ५. 'वृद्धास्तु वि' क. पाठः ।

# अथ तोरणभङ्गादिशान्तिको नाम षट्चत्वारिंशोऽध्यायः

पुरातनं नवं वापि कृतं वाथार्धनिर्मितम् ।
देवतानां[1] नृपाणां च तोरणं निपतेद्[2] यदि ॥ १ ॥

भज्यते दह्यते वाथ नमते सज्जतेऽथवा ।
दवविद्युज्जलाद्यैर्वा हन्यते तत् कदाचन ॥ २ ॥

तत्र दोषान् प्रवक्ष्यामो दोषप्रशमनानि च ।
तोरणं निपतेत् सर्वं शिरो वास्य कथञ्चन ॥ ३ ॥

राज्ञां सेनापतीनां च प्रतीहारपुरोधसाम् ।
प्रधानां[3]श्वगजानां च विप्रपौरजनस्य च ॥ ४ ॥

तत्र मृत्युभयं विद्याद् दुर्भिक्षं चापि निर्दिशेत् ।
तस्मात् प्रशमहेत्वर्थं विधिं कुर्यादिमं बुधः ॥ ५ ॥

ऋत्विग्भिर्ब्राह्मणैर्धीरैः[4] स्थपतिः सपुरोहितैः ।
रात्रौ होमबलिं कुर्यान्नगरे तु चतुर्दिशम् ॥ ६ ॥

कर्णचत्वरशृङ्गाटेष्ववनीपालवेश्मनि ।
स्थानेष्वेतेषु विप्राद्यैर्वेदिं निष्पाद्य साक्षताम् ॥ ॥ ७ ॥

कलशैर्द्रव्यगन्धैश्च श्वेतमाल्याम्बरैर्वृताम् ।
तत्र होमं प्रकुर्वीत शान्तिकं बलिमेव च ॥ ८ ॥

एवं प्रशमयेत् सर्वं यत्किञ्चिद् दुरितोत्थितम् ।
तोरणं भज्यते चेत् तद्राष्ट्रभङ्गं विनिर्दिशेत् ॥ ९ ॥

अस्य प्रशमहेत्वर्थं पूर्वोक्तं कारयेद् विधिम् ।
[5]तदेवैकं प्रदह्येत तोरणं नगरे[6](र्यं?य)दि ॥ १० ॥

तदा वह्निभयं ब्रूयाद् राष्ट्रस्य नगरस्य च ।
सबाह्याभ्यन्तरं विप्रैर्विधिमेनं प्रयोजयेत् ॥ ११ ॥

---

१. 'ऋषीणां च' ख. ग. पाठः । २. 'पत्यते य' क, नृपतेर्यदि' ग. पाठः । ३. 'नानां ग' ख. ग. पाठः । ४. 'वीं', ५. 'तदा चैकं' क. पाठः । ६. 'रै'. ग. पाठः ।

नते वा शीर्णभग्ने वा व्याधिपीडां विनिर्दिशेत् ।
होमं बलिं च कुर्वीत पुनःसंस्कारमस्य च ॥ १२ ॥

वातेन विद्युता वापि तोरणं यदि भज्यते ।
तस्मिन् रोगाः प्रवर्तन्ते कुलपीडाधनक्षयाः[1] ॥ १३ ॥

शान्तिकर्म प्रकुर्वीत ततः शान्तिकरं भवेत् ।
एवमादौ कृते पश्चात् पुनः संस्कारयेद् बुधः ॥ १४ ॥

पूर्वावयवनिर्माणाद् विशिष्टं रचयेत् पुनः ।
[2]दृढसन्धिनिगूढं च दृढद्रव्यसमन्वितम् ॥ १५ ॥

विविधं रूपकर्माढ्यं सुसंस्था[3]नं मनोरमम् ।
अकुब्जमनतं चैव पूर्वोत्कृष्टतरं तथा ॥ १६ ॥

नियुक्ते तु पुनः शान्तिं ब्राह्मणान् वाचयेत् ततः ।
पुराणे वा नवे वाथ कृते वार्धकृतेऽथवा ॥ १७ ॥

प्रासादे वा गृहे वापि कपोतः प्रविशेद् यदि ।
तत्र दोषाः प्रपद्यन्ते शान्तिकर्म तथैव च ॥ १८ ॥

[4]कालमूर्तिः कपोतश्च पापमूलकरण्डकम् ।
विहङ्गापशदो हीनः कृष्णचारी विहङ्गमः ॥ १९ ॥

चतुर्विधः समाख्यातो मुनिभिः स तपोधनैः ।
श्वेतो विचित्रकण्ठश्च विचित्रोऽन्योऽथ कृष्णकः ॥ २० ॥

कपोतो भवने यस्य श्वेतवर्णो विशेत् क्वचित् ।
कीर्त्तिविद्याधनं पुण्यं शीघ्रं च नयते क्षयम् ॥ २१ ॥

नित्यं रोगाः प्रवर्धन्ते शिशुपीडा च जायते ।
चित्रकण्ठो हरेज्जायां पुत्रान् सर्वान् विचित्रकः ॥ २२ ॥

सर्वाः सिद्धीश्च कृष्णाङ्गः [5]प्रदु[6]ष्यं च कुलं हरेत् ।
रोगाः सर्वेऽपि वर्धन्ते विपदो व्यसनानि च ॥ २३ ॥

बन्धनानि च जायन्ते प्रविष्टे तु कपोतके ।
तस्मद् यत्नपरो भूत्वा प्रायश्चित्तं समाचरेत् ॥ २४ ॥

---

१. 'यः' क. ग. पाठः । २. 'दृढं' ख. ग. पाठः । ३. 'न' ग. पाठः । ४. 'कलि सूत्रं क' क. पाठः । ५. 'द्यु' क. पाठः । ६. 'ष्यं' ग. पाठः ।

स्नातस्त्रिकालशुद्धात्मा सोपवासो जितेन्द्रियः ।
देवपूजार्चनरतो नित्यं दानपरः शुचिः ॥ २५ ॥

यवान्नप्रायभोजी च नित्यं होमपरायणः ।
गुरुविप्ररतश्चैव श्वेतमाल्याम्बरस्तथा ॥ २६ ॥

गृही सगृहिणीकस्तु व्रतमेतत् समाचरेत् ।
श्वेतके पञ्चरात्रं च चित्रकण्ठे दशैव तत् ॥ २७ ॥

चित्रे पञ्चदशाहानि कृष्णे दिवसविंशतिः ।
व्रतस्थेन तु कर्तव्यमग्निकार्यं मनोरमम् ॥ २८ ॥

यथालाभं समादाय तस्य देहं सपिच्छकम् ।
निकृन्तेत् खण्डखण्डानि विभागाष्टशतानि तम् ॥ २९ ॥

घृतप्लुतानि पुण्यानि मधुलाजान्वितानि च ।
पञ्चवारुणसंज्ञेन वह्निकार्ये कृतेऽक्षतैः ॥ ३० ॥

ततश्च मांसं जुहुयाद्धव्यमात्रेण मन्त्रवित् ।
हुते क्रव्ये ततः क्षीरं दधि मध्वाज्यमेव च ॥ ३१ ॥

संपूजयेद् ग्रहान् सर्वान् ब्राह्मणान् वाचयेत् ततः ।
स्ववित्तपादं श्वेते तु विप्रेभ्यः प्रतिपादयेत् ॥ ३२ ॥

वित्तार्धं चित्रकण्ठे तु पादोनं सर्वचित्रके
कृष्णे सर्वधनत्यागः कर्तव्यो ब्राह्मणात् पुनः ॥ ३३ ॥

एवं शान्तिर्भवेद् गेहे सर्वदोषक्षयावहा ।
महतीं श्रियमाप्नोति धनलाभश्च जायते ॥ ३४ ॥

पुत्रैः पौत्रैर्वृद्धिमाप्नोप्यनन्तामायुर्दीर्घं प्राप्नुयात् संयतात्मा ।
एतत् कृत्वा मुच्यते सर्वपापैर्मेघैर्यद्वच्छारदः शीतरश्मिः ॥ ३५ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे

तोरणभङ्गकपोतप्रवेशशान्तिको नाम षट्चत्वारिंशोऽध्यायः ॥

---

१. 'था' ग. पाठः । २. 'तत्' क, 'ते' ग. पाठः । ३. 'ताक्षतानि पुष्पाणि म' ख. ग. पाठः । ४. 'णान् पु', ५. 'श्रि' ६. 'पहः' क. पाठः । ७. 'यु' क. ग. पाठः ।

# अथ वेदीलक्षणं नाम सप्तचत्वारिंशोऽध्यायः ।

वेद्यश्चतस्रो विज्ञेया याः पुरा ब्रह्मणोदिताः ।
वयं ताः संप्रवक्ष्यामो नामसंस्थानमानतः ॥ १ ॥

प्रथमा चतुरश्रा स्यात् सभद्रा च द्वितीयका ।
तृतीया श्रीधरी नाम चतुर्थी पद्मिनी स्मृता ॥ २ ॥

यज्ञकाले तथोद्वाहे देवतास्थापनेषु च ।
नीराजनेषु सर्वेषु वह्निहोमे च नित्यशः ॥ ३ ॥

नृपाभिषेचने चैव शक्रध्वजनिवेशने ।
नृपयोग्या भवन्त्येता वर्णानामनुपूर्वशः ॥ ४ ॥

चतुरश्रा तु या वेदी नवहस्ता समन्ततः ।
अष्टहस्ता प्रमाणेन सर्वभद्रा प्रकीर्तिता ॥ ५ ॥

श्रीधरी सप्त विज्ञेया हस्तान् मानेन वेदिका ।
षड्ढस्ता चैव शास्त्रज्ञैर्नलिनीह विधीयते ॥ ६ ॥

चतुरश्रा तु कर्तव्या चतुरश्रा समन्ततः ।
भद्रैस्तु सर्वतोभद्रा भूषणीया चतुर्दिशम् ॥ ७ ॥

श्रीधरी चापि विज्ञेया कोणविंशतिसंयुता
नलिनीति च विज्ञेया पद्मसंस्थानधारिणी ॥ ८ ॥

कर्तव्याः स्वस्वविस्तारादुच्छ्रयेण त्रिभागिकाः ।
कुर्यान्मन्त्रवतीभिस्ता इष्टकाभिस्तु चा(य?यि)ताः ॥ ९ ॥

चतुरश्रा यज्ञकाले विवाहे श्रीधरी स्मृता ।
देवतास्थापने वेदीं सर्वभद्रां निवेशयेत् ॥ १० ॥

नीराजने साग्निकार्ये तथा राजाभिषेचने ।
वेदी पद्मावती या च तथा शक्रध्वजोच्छ्रये ॥ ११ ॥

चतुर्मुखा तु कर्तव्या सोपानैश्च चतुर्दिशम् ।
प्रतीहारसमायुक्ता चार्धचन्द्रोपशोभिता ॥ १२ ॥

---

१. 'तासां प्र', २. स्तोन्मा', ३. 'व्या स्व', ४. 'का' क. पाठः । ५. 'व
ख. ग. पाठः ।

चतुःस्तम्भसमायुक्ता चतुष्कुम्भविराजिता ।
काञ्चनै राजतैस्ताम्रैर्मृन्मयैः कलशैस्तथा ॥ १३ ॥

कोणेकोणे तु विन्यस्तैर्वल्गुवानरभूषितैः ।
स्तम्भप्रमाणं वेदीनां कार्यं छाद्यवशेन च ॥ १४ ॥

एकेन द्वित्रिभिर्वापिच्छाद्यैः सामलसारिकैः[1] ।
स्तम्भमूलानि चाभ्यज्य गुडेन मधुसर्पिषा ॥ १५ ॥

परमान्नेन वाभ्यज्य तान् विन्यस्येद् यथातथम् ।
देवताः पूजयित्वा तु ब्राह्मणान् स्वस्ति वाचयेत् ॥ १६ ॥

चतुर्विधमितीरितं यदिह वेदिकालक्षणं
समग्रमपि वर्तते मनसि यस्य तच्छिल्पिनः ।
स याति भुवि पूज्यतामवनिभोक्तुराप्नोति च
श्रियं स्थपतिसंसदि स्फुरति चास्य शुभ्रं यशः ॥ १७ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे
वेदीलक्षणं नाम सप्तचत्वारिंशोऽध्यायः ॥

# अथ गृहदोषनिरूपणं नामाष्टचत्वारिंशोऽध्यायः ।

अतः परं गृहादीनामप्रशस्तसमुच्छ्रितम् ।
क्रियते कथितं यस्मादेकत्र सुसमं भवेत् ॥ १ ॥

रक्षोम्बुनाथकीनाशमरुद्दहनदिक्प्लवा ।
मध्यप्लवा च भूर्व्याधिदारिद्र्यमरकावहा ॥ २ ॥

वह्निप्लवा वह्निभिये मृतये दक्षिणप्लवा ।
रुजे रक्षःप्लवा प्रत्यक्प्लवा धान्यधनच्छिदे ॥ ३ ॥

कलहाय प्रवासाय रोगाय च मरुत्प्लवा ।
मध्यप्लवा तु भूमिर्या सर्वनाशाय सा भवेत् ॥ ४ ॥

१. 'र' ख. ग. पाठः

तुषास्थिकेश[1]कीटत्व[2](क)शङ्खभस्मोषरान्विताम् ।
कर्पराङ्गारिणीं दुष्टसत्त्वानार्यजनां त्यजेत् ॥ ५ ॥

चैत्रे शोककरं वेश्म ज्येष्ठे मृत्युप्रदायकम् ।
पशुनाशनमाषाढे शून्यं भाद्रपदे कृतम् ॥ ६ ॥

आ[3]श्विने कलहाय स्यात् कार्त्तिके भृत्यनाशनम् ।
माघे चाग्निभयाय स्यान्मासेष्वेषु न कारयेत् ॥ ७ ॥

पावकस्य पदे पृष्ठवंशस्यापि च पश्चिमे ।
पुरप्रासादकर्णे च कीलादि प्राक् प्रयोजयेत् ॥ ८ ॥

पूर्वपश्चिमदिङ्मूढं वास्तु स्त्रीनाशकृद् भवेत् ।
उदङ्मूढं न निष्पत्तिं याति सर्वं[4] च नाशयेत् ॥ ९ ॥

यत्तु दक्षिणदिङ्मूढं जायते मरणाय तत् ।
प्राग्वास्तुनि (तु) कुर्वीत प्रासादं मन्दिरं पुरे ॥ १० ॥

वलितं चलितं भ्रान्तं विसूत्रं च समुत्सृजेत् ।
यत् स्यान्मुखविनिष्क्रान्तं वलितं तत् प्रकीर्तितम् ॥ ११ ॥

चलितं पृष्ठनिष्क्रान्तं दिङ्मूढं भ्रान्तमुच्यते ।
विसूत्रं कर्णहीनं स्यात् फलमेषां प्रचक्ष्महे ॥ १२ ॥

वलिते चलति स्थानं चलिते विग्रहो भवेत् ।
भ्रान्तं योषिद्विनाशाय विसूत्रं भूरिशत्रुकृत् ॥ १३ ॥

मूषकोत्करवल्मीकप्रान्ता वक्रा भुजङ्गवत् ।
छिन्ना भिन्ना विकर्णा च न वास्तुनि शुभा क्षितिः ॥ १४ ॥

मूषकोत्करवत्यर्थं हन्ति वल्मीकिनी सु[5]तम् ।
विकर्णा कुरुते कर्णरोगं[6] छिन्ना विनाशिनी ।
भिन्ना भेदं करोत्युर्वी कुटिला मतिवक्रताम् ॥ १५ ॥

सपादं सत्रिभागं वा सार्धं द्विगुणमेव च ।
यत् स्यान्मुखायतं वेश्म तदनिष्टफलप्रदम् ॥ १६ ॥

१. 'सी', २. 'त्वस्थिभ' ख. ग. पाठः ३. 'अश्विन्ये क', ४. 'शुभम्' क. पाठः । ५. 'तूं' क. ग. पाठः । ६. 'गान्' क. पाठः ।

यद् द्विशालं त्रिशालं वा चतुःशालमथापि वा ।
मूषया रहितं वेश्म तदनिष्टफलप्रदम् ॥ १७ ॥

पुरतः पृष्ठतः पार्श्वे यदि वालिन्दवर्जिता ।
गृहे न शस्यते शाला देवागारे तु शस्यते ॥ १८ ॥

अन्यपृष्ठस्थितद्वारं वेश्म खादकमुच्यते ।
परस्परविरोधाय तद् वेश्म गृहिणोस्तयोः ॥ १९ ॥

सशल्यं पादहीनं च समसन्धि शिरोगुरु[1] ।
वेश्मनामिदमुद्दिष्टं मर्मदोषचतुष्टयम् ॥ २० ॥

वास्तुक्षेत्रस्य यत्राङ्गे यस्य वर्त्म प्रवर्तते ।
[2]तदङ्गं वास्तुनस्तस्यच्छिन्नं तेनेति निर्दिशेत् ॥ २१ ॥

छिन्नाङ्गं विकलं तत् स्याद् भीतिदं सर्वदोषकृत् ।
तद्भर्तुर्भज्यतेऽङ्गं तद् वेधस्तस्याफलोऽन्यथा ॥ २२ ॥

स्वगृहद्वयमध्येन निर्वाहो यदि वर्त्मनः ।
द्वारवेधोदितान् दोषांस्तदा प्राप्नोति निश्चितम् ॥ २३ ॥

मार्गश्चैको यदा गच्छेदुभयोर्गृहपार्श्वयोः ।
मार्गवेधस्तदा स स्याच्छोकसन्तापकारकः ॥ २४ ॥

उत्सङ्गः पूर्णबाहुश्च हीनबाहुस्तथापरः ।
प्रत्यक्षाय इति प्रोक्तं प्रवेशानां चतुष्टयम् ॥ २५ ॥

गृहस्य सम्मुखं यत्र द्वारं भवति वास्तुनः ।
उत्सङ्ग इति स[3] प्रोक्तः पूर्णबाहुः प्र[4]दक्षिणः§ ॥ २६ ॥

वामतो हीनबाहुः स्यात् प्रत्य[5](क्षो वा?क्षाय)स्तु पृष्ठतः ।
चतुर्थोऽयं समुद्दिष्टः प्रवेशो वास्तुनो बुधैः ॥ २७ ॥

उत्सङ्गाख्ये प्रवेशे स्यात् प्रजाहानिः कुटुम्बिनः ।
धनधान्यक्षयो वास्य मरणं वा ध्रुवं भवेत् ॥ २८ ॥

पूर्णबाहौ पुत्रपौत्रा धनधान्यसुखानि च ।
भवन्ति वसतो नित्यं गृहिणस्तत्र वास्तुनि ॥ २९ ॥

---

१. 'रुः' ख. ग. पाठः । २. 'य' क. पाठः । ३. 'सं', ४. 'सु', ५. 'त्युक्तो वा' ख. पाठः ।

---

§ 'पूर्णबाहुस्तु' दक्षिणे इति तु पाठो युक्तः ।

अल्पमित्रो गृही हीनबाह्यावत्यल्पबान्धवः ।
स्याद् बाल्पवित्तो जीयेत स्त्रीभिः पीड्येत वामयैः ॥ ३० ॥

प्रत्यक्षायप्रवेशस्तु विहितो यत्र वेश्मनि ।
तस्मिन् निवसतां पुंसां निश्चितः स्याद् धनक्षयः ॥ ३१ ॥

मूषास्वस्थानयुक्तासु शालभेद इति स्मृतः ।
प्राप्नोति तत्र निवसन् मृत्युं दुःखं सरोगताम् ॥ ३२ ॥

उदग्दक्षिणशालासु पुर्वापरगतासु च ।
अन्यथा वा स्थितं द्वारं वधबन्धनकारकम् ॥ ३३ ॥

मूषागतान् भ्रमान् कुर्यान्न शालां प्रतिभेदयेत् ।
भ्रमभग्नासु शालासु विपद्यन्ते कुटुम्बिनः ॥ ३४ ॥

शालाभेदो भवेद् यत्र पृष्ठतः पार्श्वतो[1]ऽपि वा ।
धनधान्यक्षयस्तत्र गृहिणो जायते ध्रुवम् ॥ ३५ ॥

यत्र प्रत्यङ्मुखे शाले गृहं तत् स्याद् विकोकिलम् ।
आयुश्चतुष्पदं धान्यं वसतां तत्र नश्यति ॥ ३६ ॥

सीमाशालाप्रभिन्नस्य प्रासादस्य गृहस्य च ।
अस्थिरा जायते ऋद्धिः स्थितिश्च न भवेच्चिरम् ॥ ३७ ॥

सर्वदोषकरी ज्ञेया गर्भे चन्द्रावलोकि[2]ता ।
मूषां विना विनाशाय कामोच्छित्त्यै गवाक्षकः ॥ ३८ ॥

यदा गण्डोऽथवा कुक्षिः पृष्ठं कक्षाथ भिद्यते ।
दारिद्र्यं जायते भर्तुस्तदानीमतिदुस्सहम् ॥ ३९ ॥

गर्भादुभयतो गण्डौ कक्षे स्तः कर्णभित्तिगे ।
दक्षिणोत्तरयोः कु[3]क्षी पृष्ठतः पृष्ठमादिशेत् ॥ ४० ॥

स्थापितद्वारसंरोधे गृहिणो जायतेऽश्मरी ।
द्वारे तु विहिते तस्मिन्ननर्थस्तस्य जायते ॥ ४१ ॥

पूर्वद्वारनिरोधं तु नवमार्गं कदाचन (?) ।
श्रोत्ररोधेऽश्मरीदोषः कृत्तश्रोत्रेह्य नैम्यता[4][5] (?) ॥ ४२ ॥

---

१. 'थ' ग. पाठः । २. 'कना' ख. ग. पाठः । ३. 'क्षौ' क. पाठः । ४. 'न्य' ग. पाठः । ५. 'नंषता' ख. पाठः ।

कृत्ता[1]नि यत्र ची[2]यन्ते गवाक्षालोकनानि च ।
तत्र प्रसूतिर्न भवेन्निष्पन्नापि विनश्यति ॥ ४३ ॥

चीयमाना यदा भित्तिर्दक्षिणा स्याद् बहिर्मुखी[3] ।
तदा व्याधिभयं विद्यान्नृपदण्डभयं तथा ॥ ४४ ॥

यदा तु पश्चिमं कुड्यं प्रयाति बहिरग्रतः ।
धनहानिं विजानीयाच्चौरेभ्यश्च भयं तदा ॥ ४५ ॥

उत्तरं तु यदा कुड्यं चीयमानं बहिर्व्रजेत् ।
गृहभर्तुश्च कर्तुश्च व्यसनं स्यात् तदा महत् ॥ ४६ ॥

यदाग्रं चीयमानायाः पूर्वभित्तेर्बहिर्व्रजेत् ।
तदा गृहपतेस्तीव्रं राजदण्डभयं भवेत् ॥ ४७ ॥

प्राग्दक्षिणो यदा कर्णश्चीयमानो बहिर्व्रजेत् ।
तत्राग्निभीतिरतुला संशयश्च प्रभोर्भवेत् ॥ ४८ ॥

बहिर्मुखो यदा गच्छेत् कर्णो दक्षिणपश्चिमः ।
कलहोपद्रवस्तत्र स्याद् भार्यायाश्च संशयः ॥ ४९ ॥

यत्रोत्तरापरः कर्णश्चीयमानो व्रजेद् बहिः ।
पुत्रवाहनभृत्यानां भवेत् तस्मिन्नुपद्रवः ॥ ५० ॥

यदा प्रागुत्तरः कर्णो बहिर्गच्छति वेश्मनः ।
तदा गवां वृषाणां च गुरूणां च क्षयो भवेत् ॥ ५१ ॥

चतस्रो भित्तयो यस्य बहिर्निर्यान्ति वेश्मनः ।
चीयमानास्तदत्रोक्तं मन्दिरं मल्लिकाकृति ॥ ५२ ॥

तादृग् गृहे न तत्रायो व्ययो भवति या[4]दृशः ।
कर्शितोऽस्यैव दोषेण तस्य भर्ता पलायते ॥ ५३ ॥

संक्षिप्यते तु यद् वेश्म चीयमानं समन्ततः ।
संक्षिप्तमिति तज्ज्ञेयं तत्र राजभयं भवेत् ॥ ५४ ॥

यत् स्यादन्तेषु संक्षिप्तं विस्तृतं चापि मध्यतः ।
मृदङ्गाकृतिसंस्थानं तत्र व्याधिभयं भवेत् ॥ ५५ ॥

---

१. 'ता' ख. पाठः । २. 'यी' क, 'वी' ख. पाठः । ३. 'खा' क. पाठः ।
४. 'ता' ख. पाठः ।

आद्यन्तविस्तृतं यत् स्यात् संक्षिप्तं चापि मध्यतः।
मृदुमध्यं तदुद्दिष्टं क्षुद्भयं तत्र जायते ॥ ५६ ॥
विषमैरुन्नतैः कर्णैर्धनक्षयकरं गृहम् ।
भित्तिवच्चापि कर्णेषु प्रागुक्तं फलमादिशेत् ॥ ५७ ॥
मध्ये द्वारं न कर्तव्यं मनुजानां कथञ्चन ।
मध्ये द्वारे कृते तत्र कुलनाशः प्रजायते ॥ ५८ ॥
द्वारं द्वारेण वा विद्धमशुभायोपपद्यते ।
अनिष्टद्रव्यसंयुक्तं धनधान्यविनाशनम् ॥ ५९ ॥
नवं पुराणसंयुक्तमन्यं स्वामिनमिच्छति ।
अधोग्रं[1] राजदण्डाय विद्धं द्वारं विगर्हितम् ॥ ६० ॥
नवं पुराणसंयुक्तं द्रव्यं तु कलिकारकम् ।
न मिश्रजातिद्रव्योत्थं द्वारं वा वेश्म वा शुभम् ॥ ६१ ॥
गृहस्थानेषु यद् द्रव्यमधिवास्य प्रतिष्ठितम् ।
तच्चालनेन चलनं गृहभर्तुः प्रजायते ॥ ६२ ॥
अन्यवास्तुच्युतं द्रव्यमन्यवास्तौ न योजयेत् ।
प्रासादे न भवेत् पूजा गृहे च न वसेद् गृही ॥ ६३ ॥
द्रव्येण देवदग्धेन भवनं यद् विधीयते ।
न तत्र वसति स्वामी वसन्नपि विनश्यति ॥ ६४ ॥
सूर्योद्भवा द्रुमच्छाया ध्वजच्छाया च गर्हिता ।
द्वारातिक्रमणादेताः क्षुद्व्याधिकालिकारकाः ॥ ६५ ॥
प्रासादशिखरच्छाया ध्वजच्छायेति कीर्तिता ।
त्रिपञ्चसप्तमी भर्तुर्गृहतारा न शोभना ॥ ६६ ॥
निम्नोन्नतं करालं च सम्मुखं पृष्ठदेशगम् ।
वामावर्तं च न शुभं द्वारमग्रतरं गृहे ॥ ६७ ॥
निम्ने स्यात् स्त्रीजितो भर्ता दुर्जनस्थितिरुन्नते ।
सम्मुखे सुतपीडा स्यात् पृष्ठगे चपलाः स्त्रियः ॥ ६८ ॥
वामे वित्तक्षयो द्वा(रि? रे) भवत्यग्रतरे प्रभोः ।
द्वारं तस्मान्न कर्तव्यमीदृग्रूपं विचक्षणैः ॥ ६९ ॥

१. 'द्व' क, 'ध' ख. ग. पाठः। २. 'दतुनि वो' क, ख. पाठः।

नागदन्ततुलास्तम्भभित्तिमूषागवाक्षकाः ।
द्वारमध्ये न दातव्या न चैते विषमस्थिताः ॥ ७० ॥

इतिहासपुराणोक्तं वृत्तान्तप्रतिरूपकम् ।
निन्दितं च गृहे नेष्टं शस्तं देवकुलेषु तत् ॥ ७१ ॥

यानीन्द्रजालतुल्यानि यानि मिथ्याकृतानि च ।
भीषणानि च यानि स्युर्न कुर्यात् तानि वेश्मसु ॥ ७२ ॥

स्वयमुद्घाटितं द्वारमुच्चाटनकरं भवेत् ।
धनहृद् बन्धुवैरं स्यादथवा कलिकारकम् ॥ ७३ ॥

स्वयं यत् पिहितं द्वारं तद् भवेद् बहुदुःखदम् ।
सशब्दं भयकृत् पादशीतलं गर्भपातनम् ॥ ७४ ॥

द्रव्यं नाधोमुखं कार्यं प्रत्यग्याम्याननं नच ।
पश्चिमाग्रे परिक्लेशो दक्षिणाग्रे तु शून्यता ॥ ७५ ॥

स्तम्भद्वारं च भित्तिं च विपरीतं[1] न कारयेत् ।
अमीषां वैपरीत्येन दोषाः स्युर्बहवो नृणाम् ॥ ७६ ॥

मूलसूत्रानुसारेण कर्तव्या भूमिकोपरि ।
उपर्युपरि यद् वेश्मसमं[2] संतापकारकम् ७७ ॥

अधोभूमौ क्षणा ये स्युस्तत्समांश्चोर्[3]ध्वभूमिषु ।
परित्यजन्नपहितां(?) न कुर्वीत यथोत्तरम् ॥ ७८ ॥

शाला निम्ना भवेद् यस्मिन्नालिन्दस्त्वधिको भवेत् ।
निधनं जायते तत्र सदा शोकभयानि च ॥ ७९ ॥

मूलद्वारानुसारेण द्वाराण्युपरिभूमिषु ।
कुर्याद् भयप्रदानि[5] स्युर्विहितान्यन्यथा पुनः ॥ ८० ॥

क्षुद्भयप्रदमाध्मा(नं?तं) कुब्जं कुलविनाशनम् ।
अत्यर्थं पीडितं पीडां करोत्यन्तर्नतं[6] क्षयम् ॥ ८१ ॥

प्रवासो बाह्यविनते दिग्भ्रान्ते दस्युतो भयम् ।
मूलद्वारं क्षयं कुर्याद् विद्धं द्वारान्तरेण यत् ॥ ८२ ॥

---

१. 'तां' क. पाठः । २. 'समस्तं ता' ख. ग. पाठः । ३. 'तू' ग. पाठः ।
४. 'ताः' ख. ग. पाठः । ५. 'न' क. पाठः । ६. 'न्तं' क. ग. पाठः ।

प्रवासो भृत्य[1]जो द्वेषो विद्धे चत्वररथ्यया ।
ना[2]शं द्रव्यं ध्वजाविद्धं वृक्षेण शिशुदूषकम् ॥ ८३ ॥

पङ्कविद्धे भवेच्छोकः सलिलस्राविणि व्ययः ।
कूपेन विद्धेऽपस्मारो विनाशो दैवतेन च ॥ ८४ ॥

स्तम्भेन दूषणं स्त्रीणां ब्रह्मणा तु कुलक्षयः ।
मानादभ्यधिके द्वारे राजतो जायते भयम् ॥ ८५ ॥

व्यसनं मानतो हीने चौरेभ्यश्च भयं भवेत् ।
व्याधयः श्वभ्रविद्धेन धनस्य च परिक्षयः ॥ ८६ ॥

देवध्वजेन बन्धः स्यात् सभयैश्वर्यसंक्षयः ।
सन्निपातभयं वाप्या तुल्या [3]दृष्टत्वमाकृते(?) ॥ ८७ ॥

हृद्रुक् कुलालचक्रेण दारिद्र्यं वारिणा भवेत् ।
व्याधिरुर्क्[4] † कचकूटेन आपाकेन (?) सुतक्षयः ॥ ८८ ॥

नि(श्वि[5]?स्व)तोदूखलेन स्याच्छिलया चाश्मरी भवेत् ।
तोयभाण्डेन दुर्मन्त्री भस्मना चार्शसो गृही ॥ ८९ ॥

दारिद्र्यं छायया विद्धे भवेद् द्वारे कुटुम्बिनः ।
स्थलस्यन्दनवल्मीकैर्विदेशगमनं भवेत् ॥ ९० ॥

कृशं विकृतमत्युच्चं करालं शिथिलं पृथु ।
वक्रं विशालमुत्तानं (शू?स्थू)लाग्रं [6]ह्रस्वकुक्षिकम् ॥ ९१ ॥

स्वपादचलितं ह्रस्वं हीनकर्णं मुखानतम् ।
पार्श्वगं सूत्रमार्गाच्च भ्रष्टं द्वारं न शोभनम् ॥ ९२ ॥

तत् करोति क्षयं घोरं विनाशं स्वामिसम्पदः ।
वसतां कलहं नित्यमतस्तत् परिवर्जयेत् ॥ ९३ ॥

अन्तर्द्वाराद् बहिर्द्वारं नोच्चं कुर्यान्न सङ्कटम् ।
उच्चं विसङ्कटं वापि तच्छिवाय न जायते ॥ ९४ ॥

पट्टसन्धिर्यदा मध्ये द्वारस्य स्यात् कथञ्चन ।
कर्तुस्तदा विनाशः स्यात् कुलस्य च परिक्षयः ॥ ९५ ॥

१. 'जा दोषा वि', २. 'श' ख. ग. पाठः । ३. 'द्र' ख, 'द्रष्टृत्व' ग. पाठः । ४. 'क्ष्रच', ५. 'श्वि' क. पाठः । ६. 'लम्बकु' ख. पाठः ।

† कन्दकूटकमिति उपरि वक्ष्यते ।

तुला उपतुला वास्तुर्द्वारि तिर्यग् यदा कृताः ।
दारिद्र्यव्याधिसन्तापा भवन्ति स्वामिनस्तदा ॥ ९६ ॥

अनुवंशमनुप्राप्ता जयन्त्यो यदि मन्दिरे ।
वित्तायुषोस्तदाल्पत्वमनारोग्यं च जायते ॥ ९७ ॥

उदुम्बरे (वि)निहिता(नि?)[1]ललाटी नाम सा तुला ।
दूषणं मरणं वापि कन्यानां विदधाति सा ॥ ९८ ॥

उत्तराङ्गोदरे न्यस्ता ललाटेन समा यदि ।
तुला ललाटिका सापि कुलक्षयकरी भवेत् ॥ ९९ ॥

तुलापिण्डेन विन्यस्ता ज्ञेया यज्ञोपवीतिनी ।
वसतो व्यसनं कुर्यात् कुटुम्बस्यासुखं च सा ॥ १०० ॥

यदि भारतुलैकापि मध्ये विद्धा कथञ्चन ।
तदा वराङ्गं भज्येत धनं च परिहीयते ॥ १०१ ॥

भित्तिभेदो न कर्तव्यस्तुलाग्रैरखिलैरपि ।
कुर्याद् ब्रह्मपदन्यस्तो भारपट्टः कुलक्षयम् ॥ १०२ ॥

अयुक्तयोर्युक्तयोर्वा सन्धिश्चेद् भारपट्टगे[2] ।
सन्धौ स्यात् तत् सुतो ज्येष्ठः कर्तुश्चापि विनश्यति ॥ १०३ ॥

अनुवंशं न भुञ्जीत न शयीत कदाचन ।
भुञ्जानस्यार्थनाशः स्याच्छयानस्य महारुजः ॥ १०४ ॥

नाशोऽनुवंशं रोगाः स्युस्तिर्यक्स्थे रक्षसो भयम् ।
शयनागारविन्यस्ते मरणं नागदन्तके ॥ १०५ ॥

कर्णा[3]वात्(?) पक्षिराड्घण्टाध्वजंच्छत्रकुमारकान् ।
सिंहकर्णकपोतालिं गृहेषु परिवर्जयेत् ॥ १०६ ॥

इन्द्रकीलं शुकं तुम्बीमर्धवंशं च वेश्मनि ।
न कुर्यात् तत्र विहिताः सर्वदोषावहा यतः ॥ १०७ ॥

अतिक्षिप्रचिरोत्पन्नं कृशद्रव्यमपोहितम् ।
अप्रतिष्ठितसंस्थानं गृहं नमति पञ्चधा ॥ १०८ ॥

---

१. 'भल्ला' ख. पाठः । २. 'गाः' क. पाठः । ३. 'र्त्ता' ख, पाठः । ४. 'मूर्ध', ५. 'पाह' ख. ग. पाठः ।

अतिस्थूलेन ह्रस्वेन शरीरेण यथा नरः ।
विरूपो दुर्बलश्चैव तथा द्रव्येण मन्दिरम् ॥ १०९ ॥
जीर्णं घुण(क्ष?क्ष)तं मिश्रं हीनं वक्रं विधिच्युतम् ।
चण्डं तुण्डं वक्रकोणं सन्धिविद्धाल्पमूलके ॥ ११० ॥
वज्रमध्यं स्थूलमूलं कुक्षिभिन्नं च दारु यत् ।
भिन्नमूलं कूर्मपृष्ठं पक्षहीनं च वर्जयेत् ॥ १११ ॥
पातितान् वर्जयेद् वृक्षान् द्विपाश्वाग्निजलानिलैः ।
प्रभूतपक्षिनिलयान् काककौशिकसेवितान् ॥ ११२ ॥
मधुग्रहपिशाचाहिदुष्टांश्चैत्यश्मशानजान् ।
चतुष्पथत्रिकमहानदीसङ्गममार्गजान् ॥ ११३ ॥
देवतायतनेजातानूर्ध्वशुष्कान्[1] क्षतच्छदान्[2] ।
वल्लीपिनद्धान् सुषिरकोटरग्रन्थिसङ्कुलान् ॥ ११४ ॥
याम्यापराशापतितांस्त्यजेत् कण्टकिनोऽपि च ।
कपित्थोदुम्बराश्वत्थशिरीषवटचम्पकान् ॥ ११५ ॥
कोविदारधवारिष्टश्लेष्मातकविभीतकान् ।
किञ्च सप्तच्छदक्षीरिफलदांश्च द्रुमांस्त्यजेत् ॥ ११६ ॥
मर्माणि यत्र पीड्यन्ते द्वारैर्भित्तिभिरेव वा ।
दारिद्र्यं कुलहानिं वा गृहिणस्तत्र निर्दिशेत् ॥ ११७ ॥
स्तम्भैर्विनश्यति स्वामी तुलाभिः स्त्रीवधो ध्रुवम् ।
सङ्ग्रहैर्बन्धुनाशः स्याज्जयन्तीभिः स्नुषावधः ॥ ११८ ॥
मर्मस्थानास्थितैः कायैर्भर्तुः कायो निपीड्यते ।
मर्मस्थैः सन्धिपालैस्तु सुहृद्विश्लेषमादिशेत् ॥ ११९ ॥
गृहपीडा नागदन्तैर्नागपाशैर्धनक्षयः ।
कापिच्छकैस्तु प्रेष्याणां क्षयं मर्मस्थितैर्वदेत् ॥ १२० ॥
षड्दारुकान्यनुसरागवाक्षालोकनानि च ।
मर्मस्थानानिविष्टानि जनयन्ति महाभयम् ॥ १२१ ॥
स्तम्भैर्वा द्वारमध्यैर्वा तुलाभिर्नागपाशकैः ।
वातायनैर्नागदन्तैर्द्वारमध्ये निपीडिते ॥ १२२ ॥

---

१. 'गु' क. पाठः । २. 'च्छदावृतान्' ख. ग. पाठः ।

व्याधयः संप्रवर्धन्ते धननाशः कुलक्षयः ।
राजदण्डभयं च स्यादपत्यानां च पीडनम् ॥ १२३ ॥

षड्दारुकाणां मध्येषु द्वारमध्येषु वा पुनः ।
कर्णद्रव्यादिभिर्विद्धेष्वेतदेवादिशेत् फलम् ॥ १२४ ॥

संविद्धा नागदन्तैर्या स्तम्भैर्वातायनैस्तथा ।
शय्या शस्त्राद् भयं भर्तुः कुर्यात् तस्करतोऽपि वा ॥ १२५ ॥

गृहमध्ये कृतं द्वारं द्रव्यकोशविनाशनम् ।
आवहेत् कलहं भर्तुर्भार्यां वास्य प्रदूषयेत् ॥ १२६ ॥

द्रव्येणैकोत्तरेणापि महामर्माणि पीडिते ।
सर्वस्वनाशो गृहिणो मरणं वा ध्रुवं भवेत् ॥ १२७ ॥

द्वारस्तम्भतुलालिन्द(श्वे?च)यदोषैः समीरितैः ।
विसूत्रे नागदन्तेऽपि तच्छून्यं जायते गृहम् ॥ १२८ ॥

त्रिभागपदहीनेषु रूपस्थानेषु वास्तुषु ।
यक्षमातृक्रियाद्येषु रोगान्मृत्युर्न संशयः ॥ १२९ ॥

कटुकण्टकिदुर्गन्धिगुह्यकाद्याश्रयान् द्रुमान् ।
न धारयेत् समीपस्थान् पुरप्रासादवेश्मनाम् ॥ १३० ॥

बदरी कदली चैव दाडिमी बीजपूरिका ।
प्ररोहन्ति गृहे यत्र तद्गृहं न प्ररोहति ॥ १३१ ॥

द्रव्यं द्रव्याधिकं हन्ति कुलमायामतोऽधिकम् ।
उच्छ्रयाभ्यधिकं पूजां सन्ततिं विस्तराधिकम् ॥ १३२ ॥

स्तम्भाङ्गैर्भित्तिभिः पट्टैः शीर्षकैर्भवनैस्तथा ।
आलोकनातोरणाद्यैश्छाद्यकैः कन्दकूटकैः ॥ १३३ ॥

द्वीरशाखोत्तमाङ्गैश्च तुलाभिः सन्धिपालकैः ।
अर्गलाग्रैर्वेदिकाभिर्व्यालैर्जालैश्च नूतनैः ॥ १३४ ॥

घातितैः पातितैर्न(ष्टै?ष्टि)र्जायते गृहिणो ध्रुवम् ।
व्याधिदारिद्र्यदुःखार्तिर्निर्धनत्वं च जायते ॥ १३५ ॥

---

१. 'तु', २. 'त्रृ' क. ख. पाठः । ३. 'न्दै' क. पाठः । ४. 'स्व' ख. ग. पाठः । ५. 'कि' क. ख. ग. पाठः । ६. 'मः', ७. 'च' क. पाठः ।

उच्चच्छाद्यं छिद्रगर्भं भ्रमितं वमितं[1] मुखे ।
हीनमध्यं नष्टसूत्रं[2] शल्यविद्धं[3] शिरोगुरु ॥ १३६ ॥

भ्रष्टालिन्दकशोभं च विषमस्थं तुलार्तलम्[4] ।
अन्योन्यद्रव्यविद्धं च कुंपदप्रविभाजितम्[5] ॥ १३७ ॥

हीनभित्त्युत्तमाङ्गं च विनष्टं स्तम्भभित्तिकम् ।
भिन्नशालं त्यक्तकण्ठं निष्कन्दं मानवर्जितम् ॥ १३८ ॥

विकृतं च गृहं भर्तुरनिष्टफलदायकम् ।
तस्माद् दोषानिमांस्त्यक्त्वा गृहं कुर्याच्छुभावहम् ॥ १३९ ॥

एवंविधं दोषकरं गृहं स्याद् भर्तुश्च कर्तुश्च यतस्तदेते ।
ज्ञेयाः सदा शिल्पिभिरप्रमत्तैस्त्याज्याश्च दोषाः शुभकीर्त्तिकामैः ॥ १४० $\frac{1}{2}$ ॥

इति महाराजाधिराजश्रीभोजदेवविरचिते समराङ्गणसूत्रधारापरनाम्नि वास्तुशास्त्रे

गृहदोषनिरूपणं नामाष्टचत्वारिंशोऽध्यायः ॥

## अथ रुचकादिप्रासादलक्षणं नामैकोनपञ्चाशोऽध्यायः ।

त्रिदशानां नृपाणां च वर्णिनां च विशेषतः ।
उत्पत्तिप्रभृतिं ब्रूमः प्रासादा यस्य ये मताः ॥ १ ॥

पुरा ब्रह्मासृजत् पञ्च विमानान्यसुरद्विषाम् ।
वियद्वर्त्मविचारीणि श्रीमन्ति च महान्ति च ॥ २ ॥

तानि वैराजकैलासे पुष्पकं मणिकाभिधम् ।
हैमानि मणिचित्राणि पञ्चमं च त्रिविष्टपम् ॥ ३ ॥

---

१. ‘नि’ ख. ग. पाठः । २. ‘त्रं स्वश’, ३. ‘सि’, ४. ‘त्रु’ क. पाठः ।
५. ‘चतुष्पदप्रविभा’ ख. ग. पाठः ।

आत्मनः शूलहस्तस्य धनाध्यक्षस्य पाशिनः ।
सुरेशिने च विश्वेशो विमानानि यथाक्रमम् ॥ ४ ॥

बहून्यन्यानि चैवं स सूर्यादीनामकल्पयत् ।
विशेषा[1]य यथोक्तैस्तान्याकारैः प्रतिदैवतम् ॥ ५ ॥

प्रासादांश्च तदाकारान् शिलापक्के[2]ष्टकादिभिः ।
नगराणामलङ्कारहेतवे समकल्पयत् ॥ ६ ॥

वैराजं चतुरश्रं स्याद् वृत्तं कैलाससंज्ञितम् ।
चतुरश्रायताकारं विमानं पुष्पकं भवेत् ॥ ७ ॥

वृत्तायतं च मणिकमष्टाश्रि स्यात् त्रिविष्टपम् ।
तद्भेदान् श्रीमतोऽन्यांश्च विविधानसृजत् प्रभुः ॥ ८ ॥

ये यत्र विहिता भेदाः पूर्वं कमलयोनिना ।
सर्वांस्तानभिधास्यामो नामसंस्थानमानतः ॥ ९ ॥

रुचकश्चित्रकूटश्च तृतीयः सिंहपञ्जरः ।
भद्रः श्रीकूट उष्णीषः शालाक्षो[3] § गजयूथपः ॥ १० ॥

नन्द्यावर्तोऽवतंसाह्वः स्वस्तिकः क्षितिभूषणः ।
भूजयो विजयो[4] † नन्दी श्रीतरु[5]ः प्रमदाप्रियः ॥ ११ ॥

व्यामिश्रो हस्तिजातीयः कुबेरो वसुधाधरः ।
सर्वभद्रो विमाना[6]ख्यो मुक्तकोणश्च नामतः ॥ १२ ॥

चतुर्विंशतिरुद्दिष्टा चतुरश्राः समासतः ।
वृत्तांस्तथाभिधास्यामः प्रासादानपरानपि ॥ १३ ॥

वलयो दुन्दुभिः प्रान्तः पद्मः कान्तश्चतुर्मुखः ।
मा[7]ण्डूकाख्योऽथ कूर्मश्च तालीगृह उलूपिकः ॥ १४ ॥

इति वृत्ताः समासेन प्रासादा दश कीर्तिताः ।
चतुरश्रायता ये स्युः कथ्यन्ते तेऽपि नामतः ॥ १५ ॥

---

१. 'षाकेर्यय' क, 'षायद्यथो' ख. ग. पाठः । २. 'ष्ट दारुभिः' ख. ग. पाठः । ३. 'क्षोऽथ ग' क. पाठः । ४. 'या' क. ख. ग. पाठः । ५. 'मत्तः प्र' ग. पाठः । ६. 'नाङ्को' क. ख. ग. पाठः । ७. 'मान्द्रूका' क, 'मदूका' ख. ग. पाठः ।

---

§ शालाख्य इति लक्षणे पाठः । † लक्षणे तु नन्द इति पठ्यते

भवो विशालः साम्मुख्यः प्रभवः शिबिरागृहः ।
मुखशालो द्विशालश्च गृहराजोऽमलो विभुः ॥ १६ ॥

एवमेते समुद्दिष्टाश्चतुरश्रायता दश ।
अथ वृत्तायतान् ब्रूमः प्रासादानभिधानतः ॥ १७ ॥

आमोदो रैतिकस्तुङ्गश्चारुर्भूतिर्निषेवकः[1] ।
सदा(?)निषेधः सिंहाख्यः सुप्रभो लोचनोत्सवः ॥ १८ ॥

एते वृत्तायताः प्रोक्ताः प्रासादा नामतो दश ।
अष्टाश्रीणां च[2] नामानि कथयामि समासतः ॥ १९ ॥

वज्रको नन्दनः शङ्कुर्मेखलो वामनो लयः ।
महापद्मश्च हंसश्च व्योमचन्द्रोदयाविति ॥ २० ॥

अष्टाश्रय इमे प्रोक्ताः प्रासादा दश संख्यया ।
भवन्त्येवं चतुष्षष्टिर्लक्ष्मैषामधुनोच्यते ॥ २१ ॥

सस्थानमानविन्यासैर्भद्रस्तम्भादिसङ्ख्यया[4] ।
एषां विशेषा वक्ष्यन्ते पृथक् पृथगनुक्रमात् ॥ २२ ॥

ज्येष्ठो भागश्चतुर्हस्तः सार्धहस्तत्रयोऽपरः ।
कल्पनीयः कनीयांस्तु हस्तत्रितयसम्मितः ॥ २३ ॥

ज्येष्ठमध्यकनीयोभिरेवं भागैर्विभाजिताः ।
भवन्ति सर्वप्रासादा ज्येष्ठमध्याधमक्रमात् ॥ २४ ॥

चतुरश्रीकृते क्षेत्रे चतुर्भागविभाजिते ।
कुर्यात् स्वारोहकाभ्यासं पीठमंशसमुच्छ्रितम् ॥ २५ ॥

तथा तस्योपरि स्थाप्या हंसपृष्ठी[3] समन्ततः ।
हस्तमात्रोच्छ्रिता वृत्ता जलनिर्गमभूषिता ॥ २६ ॥

ततः पीठस्य तस्यान्तर्द्विभागा(यः?या)मविस्तृतिः[5] ।
प्रासादो रुचकः कार्यो भागत्रितयमुच्छ्रितः ॥ २७ ॥

सार्धभागेन संछा[6] स्यात् सार्धभागस्तु योऽपरः[7](?) ।
छा(यः?द्य)त्रयं सकण्ठं स्यात् तेन सामलसारकम् ॥ २८ ॥

---

१. 'री' ख. ग. पाठः । २. 'तु', ३. 'ष्ठा' क. पाठः । ४. 'स्त' ख. ग. पाठः ।
५. 'वृत्तमु', ६. 'स्तम्भा स्यात्' ख. पाठः । ७. 'षु' क. पाठः ।

द्वारं भागोच्छ्रितं तस्य कार्यं भागार्धविस्तृतम् ।
सप्राग्रीवः स कर्तव्यश्चतुर्दशधरावृतः ॥ २९ ॥

ससौधालिन्दकश्चारुरू[1]र्ध्वच्छाद्यो[2]पकर्षवान् ।
क्रियतेऽत्र[3] यदा स्त(म्भौ?म्भैः)[4]द्वाविंशत्या समावृतः ॥ ३० ॥

सप्राग्रीवपरिष्कारो भागिकालिन्दशोभितः ।
मध्यप्रदेशे रुचकः प्रासादः परिकीर्तितः ॥ ३१ ॥

रुचकः ।

कर्ण[5]प्राग्रीवकैश्चित्रैः सप्राग्रीवश्च यो वृतः ।
द्वाभ्यां द्वाभ्यां गवाक्षाभ्यां चतुर्दिशमलङ्कृतः ॥ ३२ ॥

कपोतालीपरिक्षिप्तः शोभितो द्वारसम्पदा ।
तदानीं चित्रकूटाख्यः प्रासादः सोऽभिधीयते ॥ ३३ ॥

चित्रकूटः ।

अयमेव पुनः षड्भिः स्तम्भैर[6]पि चितो यदा ।
प्राग्रीवकविहीनश्च स भवेज्जालरूपकः ॥ ३४ ॥

सिंहपञ्जर इत्युक्तः प्रासादः स तदा शुभः ।

सिंहपञ्जरः ।

कर्णप्राग्रीवकौ द्वौद्वावस्यैव भवतो यदा ॥ ३५ ॥
अलिन्दकगतिस्थित्या तदा भद्रः प्रकीर्तितः ।

भद्रः ।

स्याच्चित्रकूटः प्राग्रीवैश्चतुर्भिर्दिक्चतुष्टये ॥ ३६ ॥
बहिरन्तश्चतुर्द्वारः श्रीकूट इति नामतः ।

श्रीकूटः ।

षड्दारुकसमायुक्त[7]प्राग्द्वारस्त्वयमेव[8] चेत् ॥ ३७ ॥
प्रासादस्तम्भगर्भः[9]स्यात् तदोष्णीषोऽभिधीयते ।

उष्णीषः ।

चतुरंशकविस्तीर्णं षडंशविहितायति ॥ ३८ ॥

---

१. 'र्ध्वे', २. 'द्या', ३. 'न' ख. ग. पाठः । ४. 'म्भं', ५. 'कै' क. पाठः । ६. 'प' ख. ग. पाठः । ७. 'क्तं' क. ख. ग. पाठः । ८. 'व च ।' क. पाठः । ९. 'र्भस्य' ख. ग. पाठः ।

पीठं शालागृहस्योक्तं सशालानिर्गमं शुभम् ।
मध्यादपरतस्तस्य द्विभागायतविस्तृतम् ॥ ३९ ॥
विधेयं गर्भभवनमलिन्दकपरिष्कृतम् ।
कार्या[1] तस्याग्रतः सीमा भागद्वितयमायता ॥ ४० ॥
भागमेकं च विस्तीर्णा चतुःस्तम्भोपशोभिता ।
तदग्रतोऽपरा सीमा कार्या भागान् षडायता ॥ ४१ ॥
तिर्यक् स्था भागविस्तीर्णा प्रवेशद्वयशोभिता[2] ।
एष[3] शालागृहः(?) स्तम्भैर्द्वाविंशत्या समावृत[4]ः ॥ ४२ ॥
प्राग्रीववेदिकाजालपक्षसोपानकैः शुभैः ।

शालाढ्यः ।

पञ्चभागोन्मितव्यासे क्षेत्रे भागाष्टकायते ॥ ४३ ॥
पीठं कुर्यादुभयतः ससोपानं शिलाचितम् ।
मध्यादपरभागेऽस्य देवागारं निवेशयेत् ॥ ४४ ॥
(वि?द्वि)भागायामविस्तारं चतुरश्रं सुसंहि[5]तम् ।
पादोनभागविस्तारमध्यर्धं भागमुच्छ्रितम् ॥ ४५ ॥
तस्य[6] कार्यं मुखं मध्ये पार्श्वतश्चयशोभितम् ।
सचया निर्गता सीमा द्वौ भागौ त्रींस्तथाय(था?ता) ॥ ४६ ॥
चतुरश्रा चतुःस्तम्भा तदग्रे भागविस्तृता ।
पञ्चभागायता तिर्यक् कार्या सीमा तथापरा ॥ ४७ ॥
द्वात्रिंशदत्र कर्तव्याः स्तम्भाः सर्वै[7]क्यसङ्ख्यया ।
बहिःपरिसरो गर्भात् ससीम्नो भागविस्तृतः ॥ ४८ ॥
एवं स्याद् वेदिकाजालरूपादिभिरलंकृतः ।
बहि(र्व?श्च)योर्च्छ्रितश्चैष प्रासादो गजयूथपः ॥ ४९ ॥

गजयूथपः ।

षड्भागभाजिते क्षेत्रे चतुरश्रे समन्ततः ।
गर्भो द्विभागिकः कार्यो द्वारं भागसमुच्छ्रितम् ॥ ५० ॥

---

१. 'यस्त' क. ख. ग. पाठः । २. 'ताः' ख. ग. पाठः । ३. 'षा' क. ख. ग. पाठः । ४. 'ता', ५. 'ह' ख. ग. पाठः । ६. 'स्य मध्ये मुखं कार्यं पा' ख. पाठः । ७. 'सर्वे व्यसं' ख. ग. पाठः । ८. 'ज्झि' ख. पाठः ।

भागार्धं द्वारविस्तारः प्रासादस्योच्छ्रितिं पुनः ।
कुर्वीत चतुरो भागान् छादयेच्चित्रकूटवत् ॥ ५१ ॥

कार्या द्विभागिकाः शालाः सालिन्दास्तस्य बाह्यतः ।
बहिर्भित्तिपरिक्षिप्ताश्चतुर्भागायताः शुभाः ॥ ५२ ॥

द्वौ द्वौ गवाक्षकौ स्तम्भाः प्रतिशालं भवन्ति षट् ।
चतुःस्तम्भधृतैर्युक्ता[1]ः कार्या वा धार्मिकालयैः ॥ ५३ ॥

नन्द्यावर्तोऽयमेवं स्यात् सप्राग्रीवचतुष्टयः ।
प्रागु(?)द्वारक्षणोपेतः प्रासादः शुभलक्षणः ॥ ५४ ॥

नन्द्यावर्तः ।

क्षे(त्र?त्रे)षड्भागविस्तारे दशभागकृतायतौ ।
मध्यादपरभागे[2]ऽस्य देवकोष्ठं निवेशयेत् ॥ ५५ ॥

चतुरंशप्रतिन्या[3]सं चतुरश्रं समन्ततः ।
द्वारं तस्य विधातव्यं भागमध्यर्धमुच्छ्रितम् ॥ ५६ ॥

पादोनं भागविस्तारं सिंहवक्त्रविभूषितम् ।
सीमा तस्याग्रतः कार्या देवकोष्ठेन सम्मिता ॥ ५७ ॥

स्तम्भैः षोडशभिर्युक्ता भागद्वितयमुच्छ्रितैः ।
ससीम्नो देवकोष्ठस्य समन्ताद् भित्तिवेष्टितः ॥ ५८ ॥

अलिन्दो भागिकः कार्यो गवाक्षैरुपशोभितः ।
(तत्)सीम्नोश्चा[4]ग्रतः पार्श्वे षड्दारुकयुता बहि[5]ः ॥ ५९ ॥

कार्या द्विरंशाः प्राग्रीवा भागिकालिन्दवेष्टिताः ।
द्विद्विस्तम्भधृताः सर्वे पार्श्वतश्चयशोभिताः ॥ ६० ॥

अलिन्दास्तु चतुःस्तम्भाः कार्याः प्राग्रीवकाग्रतः ।
अवतंसक इत्येष सर्वलक्षणसंयुतः ॥ ६१ ॥

प्रासादः कथितः सम्यक्

अवतंसः ।

स्वस्तिकः प्रोच्यतेऽधुना ।
चतुरश्रीकृते क्षेत्रे षड्भागप्रविभाजिते ॥ ६२ ॥

---

१. 'क्ता का' ख. ग. पाठः । २. 'गस्थादे' क, 'गस्थदै' ख. ग. पाठः ।
३. 'न्या', ४. 'श्चायतः' ख. ग. पाठः । ५. 'ह्व' क. पाठः ।

प्रासादं कल्पयेन्मध्ये द्विभागायामविस्तृतम् ।
द्वारपाशोऽस्य भागार्ध[1]विस्तृतो भागिकोदयः ॥ ६३ ॥

गर्भवेश्म चतुःस्तम्भमलिन्दो भागिको बहिः ।
तस्य स्युर्द्वादश स्तम्भा भागिकोऽलिन्दकोऽपरः ॥ ६४ ॥

विंशतिस्तम्भसंयुक्तो विधातव्यः समन्ततः ।
चयावृ[2]तश्च पुरतो भागो वाष्टधरान्वितः ॥ ६५ ॥

भागमेकैकमुत्सृज्य कर्णाभ्यां भागविस्तृतौ ।
भागिकोच्छ्रायनिष्कासौ कार्यौ प्राग्रीवकौ पुनः ॥ ६६ ॥

बाह्यतो भित्तिसंश्लिष्टौ त्रिदि[3]शं सगवाक्षकौ ।
स्वस्तिकोऽयं समाख्यातः प्रासादश्चित्रलक्षणः ॥ ६७ ॥

स्वस्तिकः ।

अथाभिधीयतेऽधुना प्रासादः § शुभलक्षणः ।
षड्भागभाजिते क्षेत्रे चतुरश्रे समन्ततः ॥ ६८ ॥

द्विभागायामविस्तारं मध्ये गर्भगृहं भवेत् ।
भागद्वयोच्छ्रितैः स्तम्भैर्युतं व्यक्तैः सलक्षणैः ॥ ६९ ॥

निष्क्रान्तेषु बहिर्भागे गर्भपादेषु योजयेत् ।
तोरणानि मनोज्ञानि ककुप्सु चतसृष्वपि ॥ ७० ॥

गर्भस्तम्भप्रमाणेन तानि स्तम्भद्वयेन वा ।
समुत्क्षिप्तानि युक्तानि कलशै र[4]विमण्डलैः ॥ ७१ ॥

पल्लवैः पत्रजात्यादिविन्यासैश्चाप्यनेकशः ।
भूषितास्ये पुनर्मूर्ध्नि मकराणां मुखैरपि ॥ ७२ ॥

स्तम्भयोरन्तरे दद्यादुभौ मकरखूरिमौ ।
अन्योन्याभिमुखे[5] श्लिष्टे कुर्यान्मकरयोर्मुखे ॥ ७३ ॥

चतुर्णामपि निर्दिष्टस्तोरणानां मया विधिः ।
अलिन्दो भागिकश्चान्यो बहिर्भागे प्रकीर्तितः ॥ ७४ ॥

---

१. 'र्धे', २. 'त्त' क. पाठः । ३. 'दं' क, 'द' ख. ग. पाठः । ४. 'श्रि' ख. ग. पाठः । ५. 'खौ' ख. पाठः ।

---

§ 'क्षितिभूषण' इति पाठः । स्यात् ।

